१४

आ। एभिः। अग्ने। दुवः। गिरः। विश्वेभिः। सोमऽपीतये। देवेभिः। याहि। यक्षि। च॥
आ। त्वा। कण्वाः। अहूषत। गृणंति। विप्र। ते। धियः। देवेभिः। अग्ने। आ। गहि॥
इंद्रवायू॰। बृहस्पतिं। मित्रा। अग्निं। पूषणं। भगं। आदित्यान्। मारुतं। गणं॥
प्र। वः। भ्रियंते। इंदवः। मत्सराः। मादयिष्णवः। द्रप्साः। मध्वः। चमूऽसदः॥
ईळते। त्वां। अवस्यवः। कण्वासः। वृक्तऽबर्हिषः। हविष्मंतः। अरंऽकृतः॥
घृतऽपृष्ठाः। मनःऽयुजः। ये। त्वा। वहंति। वह्नयः। आ। देवान्। सोमऽपीतये॥ २६॥
तान्। यजत्रान्। ऋतऽवृधः। अग्ने। पत्नीऽवतः। कृधि। मध्वः। सुऽजिह्व। पायय॥
ये। यजत्राः। ये। ईड्याः। ते। ते। पिबंतु। जिह्वया। मधोः। अग्ने। वषट्ऽकृति॥
आकीं। सूर्यस्य। रोचनात्। विश्वान्। देवान्। उषःऽबुधः। विप्रः। होता। इह। वक्षति॥
विश्वेभिः। सोम्यं। मधु। अग्ने। इंद्रेण। वायुना। पिब। मित्रस्य। धामऽभिः॥
त्वं। होता। मनुःऽहितः। अग्ने। यज्ञेषु। सीदसि। सः। इमं। नः। अध्वरं। यज॥
युक्ष्व। हि। अरुषीः। रथे। हरितः। देव। रोहितः। ताभिः। देवान्। इह। आ। वह॥ २७॥

---

१५

इंद्र। सोमं। पिब। ऋतुना। आ। त्वा। विशंतु। इंदवः। मत्सरासः। तत्ऽओकसः॥
मरुतः। पिबत। ऋतुना। पोत्रात्। यज्ञं। पुनीतन। यूयं। हि। स्थ। सुऽदानवः॥
अभि। यज्ञं। गृणीहि। नः। ग्रावः। नेष्टः। पिब। ऋतुना। त्वं। हि। रत्नऽधाः। असि॥
अग्ने। देवान्। इह। आ। वह। सादय। योनिषु। त्रिषु। परि। भूष। पिब। ऋतुना॥
ब्राह्मणात्। इंद्र। राधसः। पिब। सोमं। ऋतून्। अनु। तव। इत्। हि। सख्यं। अस्तृतं॥
युवं। दक्षं। धृतऽव्रता। मित्रावरुणा। दुःऽदभं। ऋतुना। यज्ञं। आशाथे॥ २८॥
द्रविणःऽदाः। द्रविणसः। ग्रावऽहस्तासः। अध्वरे। यज्ञेषु। देवं। ईळते॥
द्रविणःऽदाः। ददातु। नः। वसूनि। यानि। शृण्विरे। देवेषु। ता। वनामहे॥
द्रविणःऽदाः। पिपीषति। जुहोत। प्र। च। तिष्ठत। नेष्ट्रात्। ऋतुऽभिः। इष्यत॥
यत्। त्वा। तुरीयं। ऋतुऽभिः। द्रविणःऽदः। यजामहे। अध। स्म। नः। ददिः। भव॥
अश्विना। पिबतं। मधु। दीदिंऽअग्नी॰। शुचिऽव्रता। ऋतुना। यज्ञऽवाहसा॥
गार्हऽपत्येन। संत्य। ऋतुना। यज्ञऽनीः। असि। देवान्। देवऽयते। यज॥ २९॥



---

१६

आ त्वा वहंतु हरयो वृषणं सोमपीतये । इंद्रं त्वा सूरचक्षसः ॥ १ ॥
इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इंद्रं सुखतमे रथे ॥ २ ॥
इंद्रं प्रातर्हवामह इंद्रं प्रयत्यध्वरे । इंद्रं सोमस्य पीतये ॥ ३ ॥
उप नः सुतमा गहि हरिभिरिंद्र केशिभिः । सुते हि त्वा हवामहे ॥ ४ ॥
सेमं नः स्तोममा गह्युपेदं सवनं सुतं । गौरो न तृषितः पिब ॥ ५ ॥
इमे सोमास इंदवः सुतासो अधि बर्हिषि । ताँ इंद्र सहसे पिब ॥ ६ ॥
अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः । अथा सोमं सुतं पिब ॥ ७ ॥
विश्वमित्सवनं सुतमिंद्रो मदाय गच्छति । वृत्रहा सोमपीतये ॥ ८ ॥
सेमं नः काममा पृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यः ॥ ९ ॥

---

१७

इंद्रावरुणयोरहं सम्राजोरव आ वृणे । ता नो मृळात ईदृशे ॥ १ ॥
गंतारा हि स्थोऽवसे हवं विप्रस्य मावतः । धर्तारा चर्षणीनां ॥ २ ॥
अनुकामं तर्पयेथामिंद्रावरुण राय आ । ता वां नेदिष्ठमीमहे ॥ ३ ॥
युवाकु हि शचीनां युवाकु सुमतीनां । भूयाम वाजदाव्नां ॥ ४ ॥
इंद्रः सहस्रदाव्नां वरुणः शंस्यानां । क्रतुर्भवत्युक्थ्यः ॥ ५ ॥
तयोरिदवसा वयं सनेम नि च धीमहि । स्यादुत प्ररेचनं ॥ ६ ॥
इंद्रावरुण वामहं हुवे चित्राय राधसे । अस्मान्सु जिग्युषस्कृतं ॥ ७ ॥
इंद्रावरुण नू नु वां सिषासंतीषु धीष्वा । अस्मभ्यं शर्म यच्छतं ॥ ८ ॥
प्र वामश्नोतु सुष्टुतिरिंद्रावरुण यां हुवे । यामृधाथे सधस्तुतिं ॥ ९ ॥ ४ ॥

---

१८

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवंतं य औशिजः ॥ १ ॥
यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ॥ २ ॥
मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३ ॥

१६

आ। त्वा। वहंतु। हरयः। वृषणं। सोमऽपीतये। इंद्रं। त्वा। सूरऽचक्षसः॥
इमाः। धानाः। घृतऽस्नुवः। हरी॰। इह। उप। वक्षतः। इंद्रं। सुखऽतमे। रथे॥
इंद्रं। प्रातः। हवामहे। इंद्रं। प्रऽयति। अध्वरे। इंद्रं। सोमस्य। पीतये॥
उप। नः। सुतं। आ। गहि। हरिऽभिः। इंद्र। केशिऽभिः। सुते। हि। त्वा। हवामहे॥
सः। इमं। नः। स्तोमं। आ। गहि। उप। इदं। सवनं। सुतं। गौरः। न। तृषितः। पिब॥ ३०॥
इमे। सोमासः। इंदवः। सुतासः। अधि। बर्हिषि। तान्। इंद्र। सहसे। पिब॥
अयं। ते। स्तोमः। अग्नियः। हृदिऽस्पृक्। अस्तु। शम्ऽतमः। अथ। सोमं। सुतं। पिब॥
विश्वं। इत्। सवनं। सुतं। इंद्रः। मदाय। गच्छति। वृत्रऽहा। सोमऽपीतये॥
सः। इमं। नः। कामं। आ। पृण। गोभिः। अश्वैः। शतऽक्रतो॰। स्तवाम। त्वा। सुऽआध्यः॥ ३१॥

---

१७

इंद्रावरुणयोः। अहं। संऽराजोः। अवः। आ। वृणे। ता। नः। मृळातः। ईदृशे॥
गंतारा। हि। स्थः। अवसे। हवं। विप्रस्य। माऽवतः। धर्तारा। चर्षणीनां॥
अनुऽकामं। तर्पयेथां। इंद्रावरुणा। रायः। आ। ता। वां। नेदिष्ठं। ईमहे॥
युवाकु। हि। शचीनां। युवाकु। सुऽमतीनां। भूयाम। वाजऽदाव्नां।
इंद्रः। सहस्रऽदाव्नां। वरुणः। शंस्यानां। क्रतुः। भवति। उक्थ्यः॥ ३२॥
तयोः। इत्। अवसा। वयं। सनेम। नि। च। धीमहि। स्यात्। उत। प्रऽरेचनं॥
इंद्रावरुणा। वां। अहं। हुवे। चित्राय। राधसे। अस्मान्। सु। जिग्युषः। कृतं॥
इंद्रावरुणा। नु। नु। वां। सिसासंतीषु। धीषु। आ। अस्मभ्यं। शर्म। यच्छतं॥
प्र। वां। अश्नोतु। सुऽस्तुतिः। इंद्रावरुणा। यां। हुवे। यां। ऋधाथे॰। सधऽस्तुतिं॥ ३३॥

---

१८

सोमानं। स्वरणं। कृणुहि। ब्रह्मणः। पते। कक्षीवंतं। यः। औशिजः॥
यः। रेवान्। यः। अमीवऽहा। वसुऽवित्। पुष्टिऽवर्धनः। सः। नः। सिसक्तु। यः। तुरः॥
मा। नः। शंसः। अररुषः। धूर्तिः। प्रणक्। मर्त्यस्य। रक्ष। नः। ब्रह्मणः। पते॥

स घा वीरो न रिष्यति यमिंद्रो ब्रह्मणस्पतिः । सोमो हिनोति मर्त्यं ॥ ४ ॥
त्वं तं ब्रह्मणस्पते सोम इंद्रश्च मर्त्यं । दक्षिणा पात्वंहसः ॥ ५ ॥
सदसस्पतिमद्भुतं प्रियमिंद्रस्य काम्यं । सनिं मेधामयासिषं ॥ ६ ॥
यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन । स धीनां योगमिन्वति ॥ ७ ॥
आदृध्नोति हविष्कृतिं प्रांचं कृणोत्यध्वरं । होत्रा देवेषु गच्छति ॥ ८ ॥
नराशंसं सुधृष्टममपश्यं सप्रथस्तमं । दिवो न सद्ममखसं ॥ ९ ॥

---

## १९

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि ॥ १ ॥
नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि ॥ २ ॥
ये महो रजसो विदुर्विश्वे देवासो अद्रुहः । मरुद्भिरग्न आ गहि ॥ ३ ॥
य उग्रा अर्कमानृचुरनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ॥ ४ ॥
ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिरग्न आ गहि ॥ ५ ॥
ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ॥ ६ ॥
य ईंखयंति पर्वतान् तिरः समुद्रमर्णवं । मरुद्भिरग्न आ गहि ॥ ७ ॥
आ ये तन्वंति रश्मिभिस्तिरः समुद्रमोजसा । मरुद्भिरग्न आ गहि ॥ ८ ॥
अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ॥ ९ ॥

---

## २०

अयं देवाय जन्मने स्तोमो विप्रेभिरासया । अकारि रत्नधातमः ॥ १ ॥
य इंद्राय वचोयुजा ततक्षुर्मनसा हरी । शमीभिर्यज्ञमाशत ॥ २ ॥
तक्षन्नासत्याभ्यां परिज्मानं सुखं रथं । तक्षन्धेनुं सबर्दुघां ॥ ३ ॥
युवाना पितरा पुनः सत्यमंत्रा ऋजूयवः । ऋभवो विष्ट्यक्रत ॥ ४ ॥
सं वो मदासो अग्मतेंद्रेण च मरुत्वता । आदित्येभिश्च राजभिः ॥ ५ ॥
उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतं । अकर्त चतुरः पुनः ॥ ६ ॥

सः । घ । वीरः । न । रिष्यति । यं । इंद्रः । ब्रह्मणः । पतिः । सोमः । हिनोति । मर्त्यं ॥
त्वं । तं । ब्रह्मणः । पते । सोमः । इंद्रः । च । मर्त्यं । दक्षिणा । पातु । अंहसः ॥ ३४ ॥
सदसः । पतिं । अद्भुतं । प्रियं । इंद्रस्य । काम्यं । सनिं । मेधां । अयासिषं ॥
यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपःऽचितः । चन । सः । धीनां । योगं । इन्वति ॥
आत् । ऋध्नोति । हविःऽकृतिं । प्रांचं । कृणोति । अध्वरं । होत्रा । देवेषु । गच्छति ॥
नराशंसं । सुऽधृष्टमं । अपश्यं । सप्रथःऽतमं । दिवः । न । सद्मऽमखसं ॥ ३५ ॥

---

१९

प्रति । त्यं । चारुं । अध्वरं । गोऽपीथाय । प्र । हूयसे । मरुत्ऽभिः । अग्ने । आ । गहि ॥
नहि । देवः । न । मर्त्यः । महः । तव । क्रतुं । परः । मरुत्ऽभिः । अग्ने । आ । गहि ॥
ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः । मरुत्ऽभिः । अग्ने । आ । गहि ॥
ये । उग्राः । अर्कं । आनृचुः । अनाधृष्टासः । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥
ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ३६ ॥
ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते । मरुत्ऽभिः । अग्ने । आ । गहि ॥
ये । ईंखयंति । पर्वतान् । तिरः । समुद्रं । अर्णवं । मरुत्ऽभिः । अग्ने । आ । गहि ॥
आ । ये । तन्वंति । रश्मिऽभिः । तिरः । समुद्रं । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥
अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यं । मधु । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ३७ ॥ १ ॥

---

२०

अयं । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया । अकारि । रत्नऽधातमः ॥
ये । इंद्राय । वचःऽयुजा । ततक्षुः । मनसा । हरी॰ । शमीभिः । यज्ञं । आशत ॥
तक्षन् । नासत्याभ्यां । परिऽज्मानं । सुऽखं । रथं । तक्षन् । धेनुं । सबःऽदुघां ॥
युवाना । पितरा । पुनः । सत्यऽमंत्राः । ऋजुऽयवः । ऋभवः । विष्टी । अक्रत ॥
सं । वः । मदासः । अग्मत । इंद्रेण । च । मरुत्वता । आदित्येभिः । च । राजऽभिः ॥ १ ॥
उत । त्यं । चमसं । नवं । त्वष्टुः । देवस्य । निःऽकृतं । अकर्त । चतुरः । पुनः ॥

ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते । एकमेकं सुशस्तिभिः ॥ ७ ॥
अधारयंत वह्नयोऽभजंत सुकृत्यया । भागं देवेषु यज्ञियं ॥ ८ ॥

---

२१

इहेंद्राग्नी उप ह्वये तयोरित्स्तोममुश्मसि । ता सोमं सोमपातमा ॥ १ ॥
ता यज्ञेषु प्र शंसतेंद्राग्नी शुंभता नरः । ता गायत्रेषु गायत ॥ २ ॥
ता मित्रस्य प्रशस्तय इंद्राग्नी ता हवामहे । सोमपा सोमपीतये ॥ ३ ॥
उग्रा संता हवामह उपेदं सवनं सुतं । इंद्राग्नी एह गच्छतां ॥ ४ ॥
ता महांता सदस्पती इंद्राग्नी रक्ष उब्जतं । अप्रजाः संत्वत्रिणः ॥ ५ ॥
तेन सत्येन जागृतमधि प्रचेतुने पदे । इंद्राग्नी शर्म यच्छतं ॥ ६ ॥

---

२२

प्रातर्युजा वि बोधयाश्विनावेह गच्छतां । अस्य सोमस्य पीतये ॥ १ ॥
या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे ॥ २ ॥
या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतं ॥ ३ ॥
नहि वामस्ति दूरके यत्रा रथेन गच्छथः । अश्विना सोमिनो गृहं ॥ ४ ॥
हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदं ॥ ५ ॥
अपां नपातमवसे सवितारमुप स्तुहि । तस्य व्रतान्युश्मसि ॥ ६ ॥
विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसं ॥ ७ ॥
सखाय आ नि षीदत सविता स्तोम्यो नु नः । दाता राधांसि शुंभति ॥ ८ ॥
अग्ने पत्नीरिहा वह देवानामुशतीरुप । त्वष्टारं सोमपीतये ॥ ९ ॥
आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीं । वरूत्रीं धिषणां वह ॥ १० ॥
अभि नो देवीरवसा महः शर्मणा नृपत्नीः । अच्छिन्नपत्राः सचंतां ॥ ११ ॥
इहेंद्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये ॥ १२ ॥
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां । पिपृतां नो भरीमभिः ॥ १३ ॥
तयोरिद्घृतवत्पयो विप्रा रिहंति धीतिभिः । गंधर्वस्य ध्रुवे पदे ॥ १४ ॥

ते। नः। रत्नानि। धत्तन। त्रिः। आ। साप्तानि। सुन्वते। एकंऽएकं। सुशस्तिऽभिः॥
अधारयंत। वह्नयः। अभजंत। सुऽकृत्यया। भागं। देवेषु। यज्ञियं॥ २॥

---

२१

इह। इंद्राग्नी॰। उप। ह्वये। तयोः। इत्। स्तोमं। उश्मसि। ता। सोमं। सोमऽपातमा॥
ता। यज्ञेषु। प्र। शंसत। इंद्राग्नी॰। शुंभत। नरः। ता। गायत्रेषु। गायत॥
ता। मित्रस्य। प्रऽशस्तये। इंद्राग्नी॰। ता। हवामहे। सोमऽपा। सोमऽपीतये॥
उग्रा। संता। हवामहे। उप। इदं। सवनं। सुतं। इंद्राग्नी॰। आ। इह। गच्छतां॥
ता। महांता। सदस्पती॰। इंद्राग्नी॰। रक्षः। उब्जतं। अप्रजाः। संतु। अत्रिणः॥
तेन। सत्येन। जागृतं। अधि। प्रऽचेतुने। पदे। इंद्राग्नी॰। शर्म। यच्छतं॥ ३॥

---

२२

प्रातःऽयुजा। वि। बोधय। अश्विनौ। आ। इह। गच्छतां। अस्य। सोमस्य। पीतये॥
या। सुऽरथा। रथिऽतमा। उभा। देवा। दिविऽस्पृशा। अश्विना। ता। हवामहे॥
या। वां। कशा। मधुऽमती। अश्विना। सूनृताऽवती। तया। यज्ञं। मिमिक्षतं॥
नहि। वां। अस्ति। दूरके। यत्र। रथेन। गच्छथः। अश्विना। सोमिनः। गृहं॥
हिरण्यऽपाणिं। ऊतये। सवितारं। उप। ह्वये। सः। चेत्ता। देवता। पदं॥ ४॥
अपां। नपातं। अवसे। सवितारं। उप। स्तुहि। तस्य। व्रतानि। उश्मसि॥
विऽभक्तारं। हवामहे। वसोः। चित्रस्य। राधसः। सवितारं। नृऽचक्षसं॥
सखायः। आ। नि। सीदत। सविता। स्तोम्यः। नु। नः। दाता। राधांसि। शुंभति॥
अग्ने। पत्नीः। इह। आ। वह। देवानां। उशतीः। उप। त्वष्टारं। सोमऽपीतये॥
आ। ग्नाः। अग्ने। इह। अवसे। होत्रां। यविष्ठ। भारतीं। वरूत्रीं। धिषणां। वह॥ ५॥
अभि। नः। देवीः। अवसा। महः। शर्मणा। नृऽपत्नीः। अच्छिन्नऽपत्राः। सचंतां॥
इह। इंद्राणीं। उप। ह्वये। वरुणानीं। स्वस्तये। अग्नायीं। सोमऽपीतये॥
मही। द्यौः। पृथिवी। च। नः। इमं। यज्ञं। मिमिक्षतां। पिपृतां। नः। भरीमऽभिः॥
तयोः। इत्। घृतऽवत्। पयः। विप्राः। रिहंति। धीतिऽभिः। गंधर्वस्य। ध्रुवे। पदे॥

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः १५ ॥
अतो देवा अवंतु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धामभिः ॥ १६ ॥
इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदं । समूळ्हमस्य पांसुरे ॥ १७ ॥
त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ १८ ॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इंद्रस्य युज्यः सखा ॥ १९ ॥
तद्विष्णोः परमं पदं सदा पश्यंति सूरयः । दिवीव चक्षुराततं ॥ २० ॥
तद्विप्रासो विपन्यवो जागृवांसः समिंधते । विष्णोर्यत्परमं पदं ॥ २१ ॥

---

२३

तीव्राः सोमास आ गह्याशीर्वंतः सुता इमे । वायो तान्प्रस्थितान्पिब ॥ १ ॥
उभा देवा दिविस्पृशेंद्रवायू हवामहे । अस्य सोमस्य पीतये ॥ २ ॥
इंद्रवायू मनोजुवा विप्रा हवंत ऊतये । सहस्राक्षा धियस्पती ॥ ३ ॥
मित्रं वयं हवामहे वरुणं सोमपीतये । जज्ञाना पूतदक्षसा ॥ ४ ॥
ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे ॥ ५ ॥
वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः । करतां नः सुराधसः ॥ ६ ॥
मरुत्वंतं हवामह इंद्रमा सोमपीतये । सजूर्गणेन तृंपतु ॥ ७ ॥
इंद्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवं ॥ ८ ॥
हत वृत्रं सुदानव इंद्रेण सहसा युजा । मा नो दुःशंस ईशत ॥ ९ ॥
विश्वान्देवान्हवामहे मरुतः सोमपीतये । उग्रा हि पृश्निमातरः ॥ १० ॥
जयतामिव तन्यतुर्मरुतामेति धृष्णुया । यच्छुभं याथना नरः ॥ ११ ॥
हस्काराद्विद्युतस्पर्यतो जाता अवंतु नः । मरुतो मृळयंतु नः ॥ १२ ॥
आ पूषन् चित्रबर्हिषमाघृणे धरुणं दिवः । आजा नष्टं यथा पशुं ॥ १३ ॥
पूषा राजानमाघृणिरपगूळ्हं गुहा हितं । अविंदच्चित्रबर्हिषं ॥ १४ ॥
उतो स मह्यमिंदुभिः षड्युक्ताँ अनुसेषिधत् । गोभिर्यवं न चर्कृषत् ॥ १५ ॥
अंबयो यंत्यध्वभिर्जामयो अध्वरीयतां । पृंचतीर्मधुना पयः ॥ १६ ॥
अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वंत्वध्वरं ॥ १७ ॥
अपो देवीरुप ह्वये यत्र गावः पिबंति नः । सिंधुभ्यः कर्त्वं हविः ॥ १८ ॥

स्योना। पृथिवि। भव। अनृक्षरा। निऽवेशनी। यच्छ। नः। शर्म। सऽप्रथः॥ ६॥
अतः। देवाः। अवंतु। नः। यतः। विष्णुः। विऽचक्रमे। पृथिव्याः। सप्त। धामऽभिः॥
इदं। विष्णुः। वि। चक्रमे। त्रेधा। नि। दधे। पदं। संऽऊळ्हं। अस्य। पांसुरे॥
त्रीणि। पदा। वि। चक्रमे। विष्णुः। गोपाः। अदाभ्यः। अतः। धर्माणि। धारयन्॥
विष्णोः। कर्माणि। पश्यत। यतः। व्रतानि। पस्पशे। इंद्रस्य। युज्यः। सखा॥
तत्। विष्णोः। परमं। पदं। सदा। पश्यंति। सूरयः। दिविऽइव। चक्षुः। आऽततं॥
तत्। विप्रासः। विपन्यवः। जागृऽवांसः। सं। इंधते। विष्णोः। यत्। परमं। पदं॥ ७॥

---

२३

तीव्राः। सोमासः। आ। गहि। आशीःऽवंतः। सुताः। इमे। वायो°। तान्। प्रऽस्थितान्। पिब॥
उभा। देवा। दिविऽस्पृशा। इंद्रवायू°। हवामहे। अस्य। सोमस्य। पीतये॥
इंद्रवायू°। मनःऽजुवा। विप्राः। हवंते। ऊतये। सहस्रऽअक्षा। धियः। पती°॥
मित्रं। वयं। हवामहे। वरुणं। सोमऽपीतये। जज्ञाना। पूतऽदक्षसा॥
ऋतेन। यौ। ऋतऽवृधौ। ऋतस्य। ज्योतिषः। पती°। ता। मित्रावरुणा। हुवे॥ ८॥
वरुणः। प्रऽअविता। भुवत्। मित्रः। विश्वाभिः। ऊतिऽभिः। करतां। नः। सुऽराधसः॥
मरुत्वंतं। हवामहे। इंद्रं। आ। सोमऽपीतये। सऽजूः। गणेन। तृंपतु॥
इंद्रऽज्येष्ठाः। मरुत्ऽगणाः। देवासः। पूषऽरातयः। विश्वे। मम। श्रुत। हवं॥
हत। वृत्रं। सुऽदानवः। इंद्रेण। सहसा। युजा। मा। नः। दुःशंसः। ईशत॥
विश्वान्। देवान्। हवामहे। मरुतः। सोमऽपीतये। उग्राः। हि। पृश्निऽमातरः॥ ९॥
जयतांऽइव। तन्यतुः। मरुतां। एति। धृष्णुऽया। यत्। शुभं। याथन। नरः॥
हस्कारात्। विऽद्युतः। परि। अतः। जाताः। अवंतु। नः। मरुतः। मृळयंतु। नः॥
आ। पूषन्। चित्रऽबर्हिषं। आघृणे। धरुणं। दिवः। आ। अज। नष्टं। यथा। पशुं॥
पूषा। राजानं। आघृणिः। अपऽगूळ्हं। गुहा। हितं। अविंदत्। चित्रऽबर्हिषं॥
उतो°। सः। मह्यं। इंदुऽभिः। षट्। युक्तान्। अनुऽसेसिधत्। गोभिः। यवं। न। चर्कृषत्॥ १०॥
अंबयः। यंति। अध्वऽभिः। जामयः। अध्वरिऽयतां। पृंचतीः। मधुना। पयः॥
अमूः। याः। उप। सूर्ये। याभिः। वा। सूर्यः। सह। ताः। नः। हिन्वंतु। अध्वरं॥
अपः। देवीः। उप। ह्वये। यत्र। गावः। पिबंति। नः। सिंधुऽभ्यः। कर्त्वं। हविः॥

अप्स्व१ंतरमृतमप्सु भेषजमपामुत प्रशस्तये । देवा भवत वाजिनः ॥ १९ ॥
अप्सु मे सोमो अब्रवीदंतर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥ २० ॥
आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक् च सूर्यं दृशे ॥ २१ ॥
इदमापः प्र वहत यत्किं च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतं ॥ २२ ॥
आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥ २३ ॥
सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इंद्रो विद्यात्सह ऋषिभिः ॥ २४ ॥ ५ ॥

---

## २४

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।
को नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥ १ ॥
अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम ।
स नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥ २ ॥
अभि त्वा देव सवितरीशानं वार्याणां । सदावन्भागमीमहे ॥ ३ ॥
यश्चिद्धि त इत्था भगः शशमानः पुरा निदः । अद्वेषो हस्तयोर्दधे ॥ ४ ॥
भगभक्तस्य ते वयमुदशेम तवावसा । मूर्धानं राय आरभे ॥ ५ ॥
नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयंत आपुः ।
नेमा आपो अनिमिषं चरंतीर्न ये वातस्य प्र मिनंत्यभ्वं ॥ ६ ॥
अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषामस्मे अंतर्निहिताः केतवः स्युः ॥ ७ ॥
उरुं हि राजा वरुणश्चकार सूर्याय पंथामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ ८ ॥
शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥ ९ ॥

अप्ऽसु। अंतः। अमृतं। अप्ऽसु। भेषजं। अपां। उत। प्रऽशंस्तये। देवाः। भवंत। वाजिनंः॥
अप्ऽसु। मे। सोमंः। अब्रवीत्। अंतः। विश्वानि। भेषजा।
अग्निं। च। विश्वऽशंभुवं। आपंः। च। विश्वऽभेषजीः॥ ११॥
आपंः। पृणीत। भेषजं। वरूथं। तन्वे। मम। ज्योक्। च। सूर्यं। दृशे॥
इदं। आपः। प्र। वहत। यत्। किं। च। दुःऽइतं। मयि।
यत्। वा। अहं। अभिऽदुद्रोहं। यत्। वा। शेपे। उत। अनृतं॥
आपंः। अद्य। अनु। अचारिषं। रसेन। सं। अगस्महि।
पयस्वान्। अग्ने। आ। गहि। तं। मा। सं। सृज। वर्चसा॥
सं। मा। अग्ने। वर्चसा। सृज। सं। प्रऽजया। सं। आयुषा।
विद्युः। मे। अस्य। देवाः। इंद्रंः। विद्यात्। सह। ऋषिऽभिः॥ १२॥

---

२४

कस्यं। नूनं। कतमस्यं। अमृतानां। मनामहे। चारुं। देवस्यं। नामं।
कः। नः। मह्यै। अदितये। पुनंः। दात्। पितरं। च। दृशेयं। मातरं। च॥
अग्नेः। वयं। प्रथमस्यं। अमृतानां। मनामहे। चारुं। देवस्यं। नामं।
सः। नः। मह्यै। अदितये। पुनंः। दात्। पितरं। च। दृशेयं। मातरं। च॥
अभि। त्वा। देव। सवितः। ईशानं। वार्याणां। सदा। अवन्। भागं। ईमहे॥
यः। चित्। हि। ते। इत्था। भगंः। शशमानः। पुरा। निदः। अद्वेषः। हस्तयोः। दधे॥
भगंऽभक्तस्य। ते। वयं। उत्। अशेम। तवं। अवंसा। मूर्धानं। रायः। आऽरभे॥ १३॥
नहि। ते। क्षत्रं। न। सहंः। न। मन्युं। वयंः। चन। अमी॰। पतयंतः। आपुः।
न। इमाः। आपंः। अनिऽमिषं। चरंतीः। न। ये। वातस्य। प्रऽमिनंति। अभ्वं॥
अबुध्ने। राजा। वरुणः। वनस्य। ऊर्ध्वं। स्तूपं। ददते। पूतऽदक्षः।
नीचीनाः। स्थुः। उपरि। बुध्नः। एषां। अस्मे॰। अंतः। निऽहिताः। केतवंः। स्युः॥
उरुं। हि। राजा। वरुणः। चकार। सूर्याय। पंथां। अनुऽएतवै। ऊं॰।
अपदे। पादा। प्रतिऽधातवे। अकः। उत। अपऽवक्ता। हृदयऽविधंः। चित्॥
शतं। ते। राजन्। भिषजंः। सहस्रं। उर्वी। गभीरा। सुऽमतिः। ते। अस्तु।
बाधस्व। दूरे। निःऽऋतिं। पराचैः। कृतं। चित्। एनंः। प्र। मुमुग्धि। अस्मत्॥

अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चंद्रमा नक्तमेति ॥ १० ॥
तत्त्वा यामि ब्रह्मणा वंदमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥ ११ ॥
तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे ।
शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो मुमोक्तु ॥ १२ ॥
शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः ।
अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥ १३ ॥
अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥ १४ ॥
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ १५ ॥

---

२५

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतं । मिनीमसि द्यविद्यवि ॥ १ ॥
मा नो वधाय हत्नवे जिहीळानस्य रीरधः । मा हृणानस्य मन्यवे ॥ २ ॥
वि मृळीकाय ते मनो रथीरश्वं न संदितं । गीर्भिर्वरुण सीमहि ॥ ३ ॥
परा हि मे विमन्यवः पतंति वस्यइष्टये । वयो न वसतीरुप ॥ ४ ॥
कदा क्षत्रश्रियं नरमा वरुणं करामहे । मृळीकायोरुचक्षसं ॥ ५ ॥
तदित्समानमाशाते वेनंता न प्र युच्छतः । धृतव्रताय दाशुषे ॥ ६ ॥
वेदा यो वीनां पदमंतरिक्षेण पततां । वेद नावः समुद्रियः ॥ ७ ॥
वेद मासो धृतव्रतो द्वादश प्रजावतः । वेदा य उपजायते ॥ ८ ॥
वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः । वेदा ये अध्यासते ॥ ९ ॥
नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा । साम्राज्याय सुक्रतुः ॥ १० ॥
अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति । कृतानि या च कर्त्वा ॥ ११ ॥
स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् । प्र ण आयूंषि तारिषत् ॥ १२ ॥
बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजं । परि स्पशो नि षेदिरे ॥ १३ ॥

अमी॰। ये। ऋक्षाः। निऽहितासः। उच्चा। नक्तं। ददृश्रे। कुहं। चित्। दिवा। ईयुः।
अदब्धानि। वरुणस्य। व्रतानि। विऽचाकशत्। चंद्रमाः। नक्तं। एति॥ १४॥
तत्। त्वा। यामि। ब्रह्मणा। वंदमानः। तत्। आ। शास्ते। यजमानः। हविःऽभिः।
अहेळमानः। वरुण। इह। बोधि। उरुऽशंस। मा। नः। आयुः। प्र। मोषीः॥
तत्। इत्। नक्तं। तत्। दिवा। मह्यं। आहुः। तत्। अयं। केतः। हृदः। आ। वि। चष्टे।
शुनःशेपः। यं। अह्वत्। गृभीतः। सः। अस्मान्। राजा। वरुणः। मुमोक्तु॥
शुनःशेपः। हि। अह्वत्। गृभीतः। त्रिषु। आदित्यं। द्रुपदेषु। बद्धः।
अव। एनं। राजा। वरुणः। ससृज्यात्। विद्वान्। अदब्धः। वि। मुमोक्तु। पाशान्॥
अव। ते। हेळः। वरुण। नमःऽभिः। अव। यज्ञेभिः। ईमहे। हविःऽभिः।
क्षयन्। अस्मभ्यं। असुर। प्रऽचेतः॰। राजन्। एनांसि। शिश्रथः। कृतानि॥
उत्। उत्ऽतमं। वरुण। पाशं। अस्मत्। अव। अधमं। वि। मध्यमं। श्रथय।
अथ। वयं। आदित्य। व्रते। तव। अनागसः। अदितये। स्याम॥ १५॥

---

२५

यत्। चित्। हि। ते। विशः। यथा। प्र। देव। वरुण। व्रतं। मिनीमसि। द्यविऽद्यवि॥
मा। नः। वधाय। हत्नवे। जिहीळानस्य। रीरधः। मा। हृणानस्य। मन्यवे॥
वि। मृळीकाय। ते। मनः। रथीः। अश्वं। न। संऽदितं। गीःऽभिः। वरुण। सीमहि॥
पराः। हि। मे। विऽमन्यवः। पतंति। वस्यःऽइष्टये। वयः। न। वसतीः। उप॥
कदा। क्षत्रऽश्रियं। नरं। आ। वरुणं। करामहे। मृळीकाय। उरुऽचक्षसं॥ १६॥
तत्। इत्। समानं। आशाते॰। वेनंता। न। प्र। युच्छतः। धृतऽव्रताय। दाशुषे॥
वेद। यः। वीनां। पदं। अंतरिक्षेण। पततां। वेद। नावः। समुद्रियः॥
वेद। मासः। धृतऽव्रतः। द्वादश। प्रजाऽवतः। वेद। यः। उपऽजायते॥
वेद। वातस्य। वर्तनिं। उरोः। ऋष्वस्य। बृहतः। वेद। ये। अधिऽआसते॥
नि। ससाद। धृतऽव्रतः। वरुणः। पस्त्यासु। आ। सांऽराज्याय। सुऽक्रतुः॥ १७॥
अतः। विश्वानि। अद्भुता। चिकित्वान्। अभि। पश्यति। कृतानि। या। च। कर्त्वा॥
सः। नः। विश्वाहा। सुऽक्रतुः। आदित्यः। सुऽपथा। करत्। प्र। नः। आयूंषि। तारिषत्॥
बिभ्रत्। द्रापिं। हिरण्ययं। वरुणः। वस्त। निःऽनिजं। परि। स्पशः। नि। सेदिरे॥

न यं दिप्संति दिप्सवो न द्रुह्वाणो जनानां । न देवमभिमातयः ॥ १४ ॥
उत यो मानुषेष्वा यशश्चक्रे असाम्या । अस्माकमुदरेष्वा ॥ १५ ॥
परा मे यंति धीतयो गावो न गव्यूतीरनु । इच्छंतीरुरुचक्षसं ॥ १६ ॥
सं नु वोचावहै पुनर्यतो मे मध्वाभृतं । होतेव क्षदसे प्रियं ॥ १७ ॥
दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि । एता जुषत मे गिरः ॥ १८ ॥
इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥ १९ ॥
त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि । स यामनि प्रति श्रुधि ॥ २० ॥
उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत । अवाधमानि जीवसे ॥ २१ ॥

---

२६

वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते । सेमं नो अध्वरं यज ॥ १ ॥
नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः । अग्ने दिवित्मता वचः ॥ २ ॥
आ हि ष्मा सूनवे पितापिर्यजत्यापये । सखा सख्ये वरेण्यः ॥ ३ ॥
आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा । सीदंतु मनुषो यथा ॥ ४ ॥
पूर्व्य होतरस्य नो मंदस्व सख्यस्य च । इमा उ षु श्रुधी गिरः ॥ ५ ॥
यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे इद्धूयते हविः ॥ ॥ ६
प्रियो नो अस्तु विश्पतिर्होता मंद्रो वरेण्यः । प्रियाः स्वग्नयो वयं ॥ ७ ॥
स्वग्नयो हि वार्यं देवासो दधिरे च नः । स्वग्नयो मनामहे ॥ ८ ॥
अथा न उभयेषाममृत मर्त्यानां । मिथः संतु प्रशस्तयः ॥ ९ ॥
विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनो धाः सहसो यहो ॥ १० ॥

---

२७

अश्वं न त्वा वारवंतं वंदध्या अग्निं नमोभिः । सम्राजंतमध्वराणां ॥ १ ॥
स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं बभूयात् ॥ २ ॥
स नो दूराच्चासाच्च नि मर्त्यादघायोः । पाहि सदमिद्विश्वायुः ॥ ३ ॥
इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसं । अग्ने देवेषु प्र वोचः ॥ ४ ॥

न । यं । दिप्संति । दिप्सवः । न । दुह्वाणः । जनानां । न । देवं । अभिऽमातयः ॥
उत । यः । मानुषेषु । आ । यशः । चक्रे । असामि । आ । अस्माकं । उदरेषु । आ ॥ १८ ॥
परा । मे । यंति । धीतयः । गावः । न । गव्यूतीः । अनु । इच्छंतीः । उरुऽचक्षसं ॥
सं । नु । वोचावहै । पुनः । यतः । मे । मधु । आऽभृतं । होताऽइव । क्षदसे । प्रियं ॥
दर्शं । नु । विश्वऽदर्शतं । दर्शं । रथं । अधि । क्षमि । एताः । जुषत । मे । गिरः ॥
इमं । मे । वरुण । श्रुधि । हवं । अद्य । च । मृळय । त्वां । अवस्युः । आ । चके ॥
त्वं । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि । सः । यामनि । प्रति । श्रुधि ॥
उत् । उत्ऽतमं । मुमुग्धि । नः । वि । पाशं । मध्यमं । चृत । अव । अधमानि । जीवसे ॥ १९ ॥

---

२६

वसिष्व । हि । मियेध्य । वस्त्राणि । ऊर्जां । पते । सः । इमं । नः । अध्वरं । यज ॥
नि । नः । होता । वरेण्यः । सदा । यविष्ठ । मन्मऽभिः । अग्ने । दिवित्मता । वचः ॥
आ । हि । स्म । सूनवे । पिता । आपिः । यजति । आपये । सखा । सख्ये । वरेण्यः ॥
आ । नः । बर्हिः । रिशादसः । वरुणः । मित्रः । अर्यमा । सीदंतु । मनुषः । यथा ॥
पूर्व्य । होतः । अस्य । नः । मंदस्व । सख्यस्य । च । इमाः । ऊं० । सु । श्रुधि । गिरः ॥ २० ॥
यत् । चित् । हि । शश्वता । तना । देवंऽदेवं । यजामहे । त्वे० । इत् । हूयते । हविः ॥
प्रियः । नः । अस्तु । विश्पतिः । होता । मंद्रः । वरेण्यः । प्रियाः । सुऽअग्नयः । वयं ॥
सुऽअग्नयः । हि । वार्यं । देवासः । दधिरे । च । नः । सुऽअग्नयः । मनामहे ॥
अथ । नः । उभयेषां । अमृत । मर्त्यानां । मिथः । संतु । प्रऽशस्तयः ॥
विश्वेभिः । अग्ने । अग्निऽभिः । इमं । यज्ञं । इदं । वचः । चनः । धाः । सहसः । यहो० ॥ २१ ॥

---

२७

अश्वं । न । त्वा । वारऽवंतं । वंदध्यै । अग्निं । नमःऽभिः । संऽराजंतं । अध्वराणां ॥
सः । घ । नः । सूनुः । शवसा । पृथुऽप्रगामा । सुऽशेवः । मीढ्वान् । अस्माकं । बभूयात् ॥
सः । नः । दूरात् । च । आसात् । च । नि । मर्त्यात् । अघऽयोः । पाहि । सदं । इत् । विश्वऽआयुः ॥
इमं । ऊं० । सु । त्वं । अस्माकं । सनिं । गायत्रं । नव्यांसं । अग्ने । देवेषु । प्र । वोचः ॥

आ नो भज परमेष्वा वाजेषु मध्यमेषु । शिक्षा वस्वो अंतमस्य ॥ ५ ॥
विभक्तासि चित्रभानो सिंधोरूर्मा उपाक आ । सद्यो दाशुषे क्षरसि ॥ ६ ॥
यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यंता शश्वतीरिषः ॥ ७ ॥
नकिरस्य सहंत्य पर्येता कयस्य चित् । वाजो अस्ति श्रवाय्यः ॥ ८ ॥
स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥ ९ ॥
जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकं ॥ १० ॥
स नो महाँ अनिमानो धूमकेतुः पुरुश्चंद्रः । धिये वाजाय हिन्वतु ॥ ११ ॥
स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः । उक्थैरग्निर्बृहद्भानुः ॥ १२ ॥
नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥ १३ ॥

---

२८

यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे ।
उलूखलसुतानामवेद्विंद्र जल्गुलः ॥ १ ॥
यत्र द्वाविव जघनाधिषवण्या कृता ।
उलूखलसुतानामवेद्विंद्र जल्गुलः ॥ २ ॥
यत्र नार्यपच्यवमुपच्यवं च शिक्षते ।
उलूखलसुतानामवेद्विंद्र जल्गुलः ॥ ३ ॥
यत्र मंथां विबध्नते रश्मीन्यमितवा इव ।
उलूखलसुतानामवेद्विंद्र जल्गुलः ॥ ४ ॥
यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुंदुभिः ॥ ५ ॥
उत स्म ते वनस्पते वातो वि वात्यग्रमित् ।
अथो इंद्राय पातवे सुनु सोममुलूखल ॥ ६ ॥
आयजी वाजसातमा ता ह्यु१च्चा विजर्भृतः । हरी इवांधांसि बप्सता ॥ ७ ॥
ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः । इंद्राय मधुमत्सुतं ॥ ८ ॥
उच्छिष्टं चम्वोर्भर सोमं पवित्र आ सृज । नि धेहि गोरधि त्वचि ॥ ९ ॥

---

आ। नः। भज। परमेषु। आ। वाजेषु। मध्यमेषु। शिक्ष। वस्वः। अंतमस्य॥ २२॥
विऽभक्ता। असि। चित्रऽभानो॰। सिंधोः। ऊर्मौ। उपाके। आ। सद्यः। दाशुषे। क्षरसि॥
यं। अग्ने। पृत्ऽसु। मर्त्यं। अवाः। वाजेषु। यं। जुनाः। सः। यंता। शश्वतीः। इषः॥
नकिः। अस्य। सहंत्य। परिऽएता। कयस्य। चित्। वाजः। अस्ति। श्रवाय्यः॥
सः। वाजं। विश्वऽचर्षणिः। अर्वत्ऽभिः। अस्तु। तरुता। विप्रेभिः। अस्तु। सनिता॥
जराऽबोध। तत्। विविड्ढि। विशेऽविशे। यज्ञियाय। स्तोमं। रुद्राय। दृशीकं॥ २३॥
सः। नः। महान्। अनिऽमानः। धूमऽकेतुः। पुरुऽचंद्रः। धिये। वाजाय। हिन्वतु॥
सः। रेवान्ऽइव। विश्पतिः। दैव्यः। केतुः। शृणोतु। नः। उक्थैः। अग्निः। बृहत्ऽभानुः॥
नमः। महत्ऽभ्यः। नमः। अर्भकेभ्यः। नमः। युवऽभ्यः। नमः। आशिनेभ्यः।
यजाम। देवान्। यदि। शक्नवाम। मा। ज्यायसः। शंसं। आ। वृक्षि। देवाः॥ २४॥

---

२८

यत्र। ग्रावा। पृथुऽबुध्नः। ऊर्ध्वः। भवति। सोतवे।
उलूखलऽसुतानां। अव। इत्। ऊं॰। इंद्र। जल्गुलः॥
यत्र। द्वौऽइव। जघना। अधिऽसवन्या। कृता।
उलूखलऽसुतानां। अव। इत्। ऊं॰। इंद्र। जल्गुलः॥
यत्र। नारी। अपऽच्यवं। उपऽच्यवं। च। शिक्षते।
उलूखलऽसुतानां। अव। इत्। ऊं॰। इंद्र। जल्गुलः॥
यत्र। मंथां। विऽबध्नते। रश्मीन्। यमितवैऽइव।
उलूखलऽसुतानां। अव। इत्। ऊं॰। इंद्र। जल्गुलः॥
यत्। चित्। हि। त्वं। गृहेऽगृहे। उलूखलक। युज्यसे।
इह। द्युमत्ऽतमं। वद। जयतांऽइव। दुंदुभिः॥ २५॥
उत। स्म। ते। वनस्पते। वातः। वि। वाति। अग्रं। इत्।
अथो॰। इंद्राय। पातवे। सुनु। सोमं। उलूखल॥
आऽयजी॰। वाजऽसातमा। ता। हि। उच्चा। विऽजर्भृतः। हरीऽइव॰। अंधांसि। बप्सता॥
ता। नः। अद्य। वनस्पती॰। ऋष्वौ। ऋष्वेभिः। सोतृऽभिः। इंद्राय। मधुऽमत्। सुतं॥
उत्। शिष्टं। चम्वोः। भर। सोमं। पवित्रे। आ। सृज। नि। धेहि। गोः। अधि। त्वचि॥ २६॥

२९

यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ १ ॥
शिप्रिन्वाजानां पते शचीवस्तव दंसना ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ २ ॥
नि ष्वापया मिथूदृशा सस्तामबुध्यमाने ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ३ ॥
ससंतु त्या अरातयो बोधंतु शूर रातयः ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ४ ॥
समिंद्र गर्दभं मृण नुवंतं पापयामुया ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ५ ॥
पताति कुंडृणाच्या दूरं वातो वनादधि ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ६ ॥
सर्वं परिक्रोशं जहि जंभया कृकदाश्वं ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ७ ॥

---

३०

आ व इंद्रं क्रिविं यथा वाजयंतः शतक्रतुं । मंहिष्ठं सिंच इंदुभिः ॥ १ ॥
शतं वा यः शुचीनां सहस्रं वा समाशिरां । एदु निम्नं न रीयते ॥ २ ॥
सं यन्मदाय शुष्मिण एना ह्यस्योदरे । समुद्रो न व्यचो दधे ॥ ३ ॥
अयमु ते समतसि कपोत इव गर्भधिं । वचस्तच्चिन्न ओहसे ॥ ४ ॥
स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते । विभूतिरस्तु सूनृता ॥ ५ ॥
ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो । समन्येषु ब्रवावहै ॥ ६ ॥
योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इंद्रमूतये ॥ ७ ॥
आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुप नो हवं ॥ ८ ॥
अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरं । यं ते पूर्वं पिता हुवे ॥ ९ ॥
तं त्वा वयं विश्ववारा शास्महे पुरुहूत । सखे वसो जरितृभ्यः ॥ १० ॥

२९

यत्। चित्। हि। सत्य। सोमऽपाः। अनाशस्ताःऽइव। स्मसि।
आ। तु। नः। इंद्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ॥
शिप्रिन्। वाजानां। पते। शचीऽवः। तव। दंसना।
आ। तु। नः। इंद्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ॥
नि। स्वापय। मिथुऽदृशा। सस्तां। अबुध्यमाने॰।
आ। तु। नः। इंद्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ॥
ससंतु। त्याः। अरातयः। बोधंतु। शूर। रातयः।
आ। तु। नः। इंद्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ॥
सं। इंद्र। गर्दभं। मृण। नुवंतं। पापया। अमुया।
आ। तु। नः। इंद्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ॥
पताति। कुंडृणाच्या। दूरं। वातः। वनात्। अधि।
आ। तु। नः। इंद्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ॥
सर्वं। परिऽक्रोशं। जहि। जंभय। कृकदाश्वं।
आ। तु। नः। इंद्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ॥ २७॥

---

३०

आ। वः। इंद्रं। क्रिविं। यथा। वाजऽयंतः। शतऽक्रतुं। मंहिष्ठं। सिंचे। इंदुऽभिः॥
शतं। वा। यः। शुचीनां। सहस्रं। वा। संऽआशिरां। आ। इत्। ऊं॰। निम्नं। न। रीयते॥
सं। यत्। मदाय। शुष्मिणे। एना। हि। अस्य। उदरे। समुद्रः। न। व्यचः। दधे॥
अयं। ऊं॰। ते। सं। अतसि। कपोतःऽइव। गर्भऽधिं। वचः। तत्। चित्। नः। ओहसे॥
स्तोत्रं। राधानां। पते। गिर्वाहः। वीर। यस्य। ते। विऽभूतिः। अस्तु। सूनृता॥ २८॥
ऊर्ध्वः। तिष्ठ। नः। ऊतये। अस्मिन्। वाजे। शतऽक्रतो॰। सं। अन्येषु। ब्रवावहै॥
योगेऽयोगे। तवःऽतरं। वाजेऽवाजे। हवामहे। सखायः। इंद्रं। ऊतये॥
आ। घ। गमत्। यदि। श्रवत्। सहस्रिणीभिः। ऊतिऽभिः। वाजेभिः। उप। नः। हवं॥
अनु। प्रत्नस्य। ओकसः। हुवे। तुविऽप्रतिं। नरं। यं। ते। पूर्वं। पिता। हुवे॥
तं। त्वा। वयं। विश्वऽवार। आ। शास्महे। पुरुऽहूत। सखे। वसो॰। जरितृऽभ्यः॥ २९॥

अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नां । सखे वज्रिन्त्सखीनां ॥ ११ ॥
तथा तदस्तु सोमपाः सखे वज्रिन्तथा कृणु । यथा त उश्मसीष्टये ॥ १२ ॥
रेवतीर्नः सधमाद इंद्रे संतु तुविवाजाः । क्षुमंतो याभिर्मदेम ॥ १३ ॥
आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः । ऋणोरक्षं न चक्र्योः ॥ १४ ॥
आ यद्दुवः शतक्रतवा कामं जरितॄणां । ऋणोरक्षं न शचीभिः ॥ १५ ॥
शश्वदिंद्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ।
स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ॥ १६ ॥
आश्विनावश्वावत्येषा यातं शवीरया । गोमद्दस्रा हिरण्यवत् ॥ १७ ॥
समानयोजनो हि वां रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ॥ १८ ॥
न्य१घ्न्यस्य मूर्द्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ॥ १९ ॥
कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि ॥ २० ॥
वयं हि ते अमन्मह्यांतादा पराकात् । अश्वे न चित्रे अरुषि ॥ २१ ॥
त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः । अस्मे रयिं नि धारय ॥ २२ ॥ ६ ॥

---

३१

त्वमग्ने प्रथमो अंगिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायंत मरुतो भ्राजदृष्टयः ॥ १ ॥
त्वमग्ने प्रथमो अंगिरस्तमः कविर्देवानां परि भूषसि व्रतं ।
विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे ॥ २ ॥
त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते ।
अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥ ३ ॥
त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः ।
श्वात्रेण यत्पित्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्नापरं पुनः ॥ ४ ॥
त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ।
य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवाससि ॥ ५ ॥
त्वमग्ने वृजिनवर्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे ।
यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ॥ ६ ॥

अस्माकं। शिप्रिणीनां। सोमऽपाः। सोमऽपाव्नां। सखे। वज्रिन्। सखीनां॥
तथा। तत्। अस्तु। सोमऽपाः। सखे। वज्रिन्। तथा। कृणु। यथा। ते। उश्मसि। इष्टये॥
रेवतीः। नः। सधऽमादे। इंद्रे। संतु। तुविऽवाजाः। क्षुऽमंतः। याभिः। मदेम॥
आ। घ। त्वाऽवान्। त्मना। आप्तः। स्तोतृऽभ्यः। धृष्णो॰। इयानः। ऋणोः। अक्षं। न। चक्र्योः॥
आ। यत्। दुवः। शतऽक्रतो॰। आ। कामं। जरितॄणां। ऋणोः। अक्षं। न। शचीभिः॥ ३०॥
शश्वत्। इंद्रः। पोप्रुथत्ऽभिः। जिगाय। नानदत्ऽभिः। शाश्वसत्ऽभिः। धनानि।
सः। नः। हिरण्यऽरथं। दंसनाऽवान्। सः। नः। सनिता। सनये। सः। नः। अदात्॥
आ। अश्विनौ। अश्वऽवत्या। इषा। यातं। शवीरया। गोऽमत्। दस्रा। हिरण्यऽवत्॥
समानऽयोजनः। हि। वां। रथः। दस्रौ। अमर्त्यः। समुद्रे। अश्विना। ईयते॥
नि। अघ्न्यस्य। मूर्धनि। चक्रं। रथस्य। येमथुः। परि। द्यां। अन्यत्। ईयते॥
कः। ते। उषः। कधऽप्रिये। भुजे। मर्तः। अमर्त्ये। कं। नक्षसे। विभाऽवरि॥
वयं। हि। ते। अमन्महि। आ। अंतात्। आ। पराकात्। अश्वे। न। चित्रे। अरुषि॥
त्वं। त्येभिः। आ। गहि। वाजेभिः। दुहितः। दिवः। अस्मे॰। रयिं। नि। धारय॥ ३१॥

३१

त्वं। अग्ने। प्रथमः। अंगिराः। ऋषिः। देवः। देवानां। अभवः। शिवः। सखा।
तव। व्रते। कवयः। विद्मनाऽअपसः। अजायंत। मरुतः। भ्राजत्ऽऋष्टयः॥
त्वं। अग्ने। प्रथमः। अंगिरःऽतमः। कविः। देवानां। परि। भूषसि। व्रतं।
विऽभुः। विश्वस्मै। भुवनाय। मेधिरः। द्विऽमाता। शयुः। कतिधा। चित्। आयवे॥
त्वं। अग्ने। प्रथमः। मातरिश्वने। आविः। भव। सुक्रतुऽया। विवस्वते।
अरेजेतां। रोदसी॰। होतृऽवूर्ये। असघ्नोः। भारं। अयजः। महः। वसो॰॥
त्वं। अग्ने। मनवे। द्यां। अवाशयः। पुरूरवसे। सुऽकृते। सुकृत्ऽतरः।
श्वात्रेण। यत्। पित्रोः। मुच्यसे। परि। आ। त्वा। पूर्वं। अनयन्। आ। अपरं। पुनः॰॥
त्वं। अग्ने। वृषभः। पुष्टिऽवर्धनः। उद्यतऽस्रुचे। भवसि। श्रवाय्यः।
यः। आऽहुतिं। परि। वेद। वषट्ऽकृतिं। एकऽआयुः। अग्रे। विशः। आऽविवाससि॥ ३२॥
त्वं। अग्ने। वृजिनऽवर्तनिं। नरं। सक्मन्। पिपर्षि। विदथे। विऽचर्षणे।
यः। शूरऽसाता। परिऽतक्म्ये। धने। दभ्रेभिः। चित्। संऽऋता। हंसि। भूयसः॥

त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवेदिवे ।
यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये ॥ ७ ॥
त्वं नो अग्ने सनये धनानां यशसं कारुं कृणुहि स्तवानः ।
ऋध्याम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥ ८ ॥
त्वं नो अग्ने पित्रोरुपस्थ आ देवो देवेष्वनवद्य जागृविः ।
तनूकृद्बोधि प्रमतिश्च कारवे त्वं कल्याण वसु विश्वमोपिषे ॥ ९ ॥
त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयं ।
सं त्वा रायः शतिनः सं सहस्रिणः सुवीरं यंति व्रतपामदाभ्य ॥ १० ॥
त्वामग्ने प्रथममायुमायवे देवा अकृण्वन्नहुषस्य विश्पतिं ॥
इळामकृण्वन्मनुषस्य शासनीं पितुर्यत्पुत्रो ममकस्य जायते ॥ ११ ॥
त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वंद्य ।
त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते ॥ १२ ॥
त्वमग्ने यज्यवे पायुरंतरोऽनिषंगाय चतुरक्ष इध्यसे ।
यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मंत्रं मनसा वनोषि तं ॥ १३ ॥
त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् ।
आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः ॥ १४ ॥
त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि विश्वतः
स्वादुक्षद्मा यो वसतौ स्योनकृज्जीवयाजं यजते सोपमा दिवः ॥ १५ ॥
इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।
आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानां ॥ १६ ॥
मनुष्वदग्ने अंगिरस्वदंगिरो ययातिवत्सदने पूर्ववच्छुचे ॥
अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियं ॥ १७ ॥
एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।
उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥ १८ ॥

त्वं। तं। अग्ने। अमृतऽत्वे। उत्ऽतमे। मर्तं। दधासि। श्रवसे। दिवेऽदिवे।
यः। ततृषाणः। उभयाय। जन्मने। मयः। कृणोषि। प्रयः। आ। च। सूरये॥
त्वं। नः। अग्ने। सनये। धनानां। यशसं। कारुं। कृणुहि। स्तवानः।
ऋध्याम। कर्म। अपसा। नवेन। देवैः। द्यावापृथिवी॰। प्र। अवतं। नः॥
त्वं। नः। अग्ने। पित्रोः। उपऽस्थे। आ। देवः। देवेषु। अनवद्य। जागृविः।
तनूऽकृत्। बोधि। प्रऽमतिः। च। कारवे। त्वं। कल्याण। वसु। विश्वं। आ। ऊपिषे॥
त्वं। अग्ने। प्रऽमतिः। त्वं। पिता। असि। नः। त्वं। वयःऽकृत्। तव। जामयः। वयं।
सं। त्वा। रायः। शतिनः। सं। सहस्रिणः। सुऽवीरं। यंति। व्रतऽपां। अदाभ्य॥ ३३॥
त्वां। अग्ने। प्रथमं। आयुं। आयवे। देवाः। अकृण्वन्। नहुषस्य। विश्पतिं।
इळां। अकृण्वन्। मनुषस्य। शासनीं। पितुः। यत्। पुत्रः। ममकस्य। जायते॥
त्वं। नः। अग्ने। तव। देव। पायुऽभिः। मघोनः। रक्ष। तन्वः। च। वंद्य।
त्राता। तोकस्य। तनये। गवां। असि। अनिऽमेषं। रक्षमाणः। तव। व्रते॥
त्वं। अग्ने। यज्यवे। पायुः। अंतरः। अनिषंगाय। चतुःऽअक्षः। इध्यसे।
यः। रातऽहव्यः। अवृकाय। धायसे। कीरेः। चित्। मंत्रं। मनसा। वनोषि। तं॥
त्वं। अग्ने। उरुऽशंसाय। वाघते। स्पार्हं। यत्। रेक्णः। परमं। वनोषि। तत्।
आध्रस्य। चित्। प्रऽमतिः। उच्यसे। पिता। प्र। पाकं। शास्सि। प्र। दिशः। विदुःऽतरः॥
त्वं। अग्ने। प्रयतऽदक्षिणं। नरं। वर्मऽइव। स्यूतं। परि। पासि। विश्वतः।
स्वादुऽक्षद्मा। यः। वसतौ। स्योनऽकृत्। जीवऽयाजं। यजते। सः। उपऽमा। दिवः॥ ३४॥
इमां। अग्ने। शरणिं। मीमृषः। नः। इमं। अध्वानं। यं। अगाम। दूरात्।
आपिः। पिता। प्रऽमतिः। सोम्यानां। भृमिः। असि। ऋषिऽकृत्। मर्त्यानां॥
मनुष्वत्। अग्ने। अंगिरस्वत्। अंगिरः। ययातिऽवत्। सदने। पूर्वऽवत्। शुचे।
अच्छ। याहि। आ। वह। दैव्यं। जनं। आ। सादय। बर्हिषि। यक्षि। च। प्रियं॥
एतेन। अग्ने। ब्रह्मणा। ववृधस्व। शक्ती। वा। यत्। ते। चकृम। विदा। वा।
उत। प्र। नेषि। अभि। वस्यः। अस्मान्। सं। नः। सृज। सुऽमत्या। वाजऽवत्या॥ ३५॥

३२

इंद्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानां ॥ १ ॥
अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्रा इव धेनवः स्यंदमाना अंजः समुद्रमव जग्मुरापः ॥ २ ॥
वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य ।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनां ॥ ३ ॥
यदिंद्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः ।
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥ ४ ॥
अहन्वृत्रं वृत्रतरं व्यंसमिंद्रो वज्रेण महता वधेन ।
स्कंधांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥ ५ ॥
अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषं ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इंद्रशत्रुः ॥ ६ ॥
अपादहस्तो अपृतन्यदिंद्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥ ७ ॥
नदं न भिन्नममुया शयानं मनो रुहाणा अति यंत्यापः ।
याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥ ८ ॥
नीचावया अभवद्वृत्रपुत्रेंद्रो अस्या अव वधर्जभार ।
उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥
अतिष्ठंतीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरं ।
वृत्रस्य निण्यं वि चरंत्यापो दीर्घं तम आशयदिंद्रशत्रुः ॥ १० ॥
दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥ ११ ॥
अश्व्यो वारो अभवस्तदिंद्र सृके यत्त्वा प्रत्यहन्देव एकः ।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिंधून् ॥ १२ ॥
नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद्ध्रादुनिं च ।
इंद्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये ॥ १३ ॥

३२

इंद्रस्य । नु । वीर्याणि । प्र । वोचं । यानि । चकार । प्रथमानि । वज्री ।
अहन् । अहिं । अनु । अपः । ततर्द । प्र । वक्षणाः । अभिनत् । पर्वतानां ॥
अहन् । अहिं । पर्वते । शिश्रियाणं । त्वष्टा । अस्मै । वज्रं । स्वर्यं । ततक्ष ।
वाश्राःऽइव । धेनवः । स्यंदमानाः । अंजः । समुद्रं । अव । जग्मुः । आपः ॥
वृषऽयमाणः । अवृणीत । सोमं । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य ।
आ । सायकं । मघऽवा । अदत्त । वज्रं । अहन् । एनं । प्रथमऽजां । अहीनां ॥
यत् । इंद्र । अहन् । प्रथमऽजां । अहीनां । आत् । मायिनां । अमिनाः । प्र । उत । मायाः ।
आत् । सूर्यं । जनयन् । द्यां । उषसं । तादीत्ना । शत्रुं । न । किल । विवित्से ॥
अहन् । वृत्रं । वृत्रऽतरं । विऽअंसं । इंद्रः । वज्रेण । महता । वधेन ।
स्कंधांसिऽइव । कुलिशेन । विऽवृक्णा । अहिः । शयते । उपऽपृक् । पृथिव्याः ॥३६॥
अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरं । तुविऽबाधं । ऋजीषं ।
न । अतारीत् । अस्य । संऽऋतिं । वधानां । सं । रुजानाः । पिपिषे । इंद्रऽशत्रुः ॥
अपात् । अहस्तः । अपृतन्यत् । इंद्रं । आ । अस्य । वज्रं । अधि । सानौ । जघान ।
वृष्णः । वध्रिः । प्रतिऽमानं । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥
नदं । न । भिन्नं । अमुया । शयानं । मनः । रुहाणाः । अति । यंति । आपः ।
याः । चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासां । अहिः । पत्सुतःऽशीः । बभूव ॥
नीचाऽवयाः । अभवत् । वृत्रऽपुत्रा । इंद्रः । अस्याः । अव । वधः । जभार ।
उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् । दानुः । शये । सहऽवत्सा । न । धेनुः ॥
अतिष्ठंतीनां । अनिऽवेशनानां । काष्ठानां । मध्ये । निऽहितं । शरीरं ।
वृत्रस्य । निण्यं । वि । चरंति । आपः । दीर्घं । तमः । आ । अशयत् । इंद्रऽशत्रुः ॥३७॥
दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिनाऽइव । गावः ।
अपां । बिलं । अपिऽहितं । यत् । आसीत् । वृत्रं । जघन्वान् । अप । तत् । ववार ॥
अश्व्यः । वारः । अभवः । तत् । इंद्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः ।
अजयः । गाः । अजयः । शूर । सोमं । अव । असृजः । सर्तवे । सप्त । सिंधून् ॥
न । अस्मै । विऽद्युत् । न । तन्यतुः । सिसेध । न । यां । मिहं । अकिरत् । ह्रादुनिं । च ।
इंद्रः । च । यत् । युयुधाते॰ । अहिः । च । उत । अपरीभ्यः । मघऽवा । वि । जिग्ये ॥

अहेर्यातारं कमपश्य इंद्र हृदि यत्ते जघ्नुषो भीरगच्छत् ।
नव च यन्नवतिं च स्रवंतीः श्येनो न भीतो अतरो रजांसि ॥ १४ ॥
इंद्रो यातोऽवसितस्य राजा शमस्य च शृंगिणो वज्रबाहुः ।
सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव ॥ १५ ॥

---

३३

एतायामोप गव्यंत इंद्रमस्माकं सु प्रमतिं वावृधाति ।
अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः ॥ १ ॥
उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।
इंद्रं नमस्यन्नुपमेभिरकैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥ २ ॥
नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इंद्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥ ३ ॥
वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिंद्र ।
धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥ ४ ॥
परा चिच्छीर्षा ववृजुस्त इंद्रायज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥ ५ ॥
अयुयुत्सन्ननवद्यस्य सेनामयातयंत क्षितयो नवग्वाः ।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिंद्राच्चितयंत आयन् ॥ ६ ॥
त्वमेतान्रुदतो जक्षतश्चायोधयो रजस इंद्र पारे ।
अवादहो दिव आ दस्युमुच्चा प्र सुन्वतः स्तुवतः शंसमावः ॥ ७ ॥
चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुंभमानाः ।
न हिन्वानासस्तितिरुस्त इंद्रं परि स्पशो अदधात्सूर्येण ॥ ८ ॥
परि यदिंद्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीं ।
अमन्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिंद्र ॥ ९ ॥
न ये दिवः पृथिव्या अंतमापुर्न मायाभिर्धनदां पर्यभूवन् ।
युजं वज्रं वृषभश्चक्र इंद्रो निर्ज्योतिषा तमसो गा अदुक्षत् ॥ १० ॥

अहेः। यातारं। कं। अपश्यः। इंद्र। हृदि। यत्। ते। जघ्नुषः। भीः। अगच्छत्।
नव। च। यत्। नवतिं। च। स्रवंतीः। श्येनः। न। भीतः। अतरः। रजांसि॥
इंद्रः। यातः। अवऽसितस्य। राजा। शमस्य। च। शृंगिणः। वज्रऽबाहुः।
सः। इत्। ऊं॰। राजा। क्षयति। चर्षणीनां। अरान्। न। नेमिः। परि। ता। बभूव॥३८॥२॥

---

३३

आ। इत। अयाम। उप। गव्यंतः। इंद्रं। अस्माकं। सु। प्रऽमतिं। ववृधाति।
अनामृणः। कुवित्। आत्। अस्य। रायः। गवां। केतं। परं। आऽवर्जते। नः॥
उप। इत्। अहं। धनऽदां। अप्रतिऽइतं। जुष्टां। न। श्येनः। वसतिं। पतामि।
इंद्रं। नमस्यन्। उपऽमेभिः। अर्कैः। यः। स्तोतृऽभ्यः। हव्यः। अस्ति। यामन्॥
नि। सर्वऽसेनः। इषुऽधीन्। असक्त। सं। अर्यः। गाः। अजति। यस्य। वष्टि।
चोष्कूयमाणः। इंद्र। भूरि। वामं। मा। पणिः। भूः। अस्मत्। अधि। प्रऽवृद्ध॥
वधीः। हि। दस्युं। धनिनं। घनेन। एकः। चरन्। उपऽशाकेभिः। इंद्र।
धनोः। अधि। विषुणक्। ते। वि। आयन्। अयज्वानः। सनकाः। प्रऽइतिं। ईयुः॥
परा। चित्। शीर्षा। ववृजुः। ते। इंद्र। अयज्वानः। यज्वऽभिः। स्पर्धमानाः।
प्र। यत्। दिवः। हरिऽवः। स्थातः। उग्र। निः। अव्रतान्। अधमः। रोदस्योः॥१॥
अयुयुत्सन्। अनवद्यस्य। सेनां। अयातयंत। क्षितयः। नवऽग्वाः।
वृषऽयुधः। न। वध्रयः। निःऽअष्टाः। प्रवत्ऽभिः। इंद्रात्। चितयंतः। आयन्॥
त्वं। एतान्। रुदतः। जक्षतः। च। अयोधयः। रजसः। इंद्र। पारे।
अव। अदहः। दिवः। आ। दस्युं। उच्चा। प्र। सुन्वतः। स्तुवतः। शंसं। आवः॥
चक्राणासः। परिऽनहं। पृथिव्याः। हिरण्येन। मणिना। शुंभमानाः।
न। हिन्वानासः। तितिरुः। ते। इंद्रं। परि। स्पशः। अदधात्। सूर्येण॥
परि। यत्। इंद्र। रोदसी॰। उभे॰। अबुभोजीः। महिना। विश्वतः। सीं।
अमन्यमानान्। अभि। मन्यमानैः। निः। ब्रह्मऽभिः। अधमः। दस्युं। इंद्र॥
न। ये। दिवः। पृथिव्याः। अंतं। आपुः। न। मायाभिः। धनऽदां। परिऽअभूवन्।
युजं। वज्रं। वृषभः। चक्रे। इंद्रः। निः। ज्योतिषा। तमसः। गाः। अधुक्षत्॥२॥

अनु स्वधामक्षरन्नापो अस्यावर्धत मध्य आ नाव्यानां ।
सध्रीचीनेन मनसा तमिंद्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥ ११ ॥
न्याविध्यदिलीबिशस्य दृळ्हा वि शृंगिणमभिनच्छुष्णमिंद्रः ।
यावत्तरो मघवन्यावदोजो वज्रेण शत्रुमवधीः पृतन्युं ॥ १२ ॥
अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद्वृत्रमिंद्रः प्र स्वां मतिमतिरच्छाशदानः ॥ १३ ॥
आवः कुत्समिंद्र यस्मिन् चाकन्प्रावो युध्यंतं वृषभं दशद्युं ।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥ १४ ॥
आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवन् छ्वित्र्यं गां ।
ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥ १५ ॥

---

३४

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यंत्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥ १ ॥
त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः ।
त्रयः स्कंभासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा ॥ २ ॥
समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतं ।
त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतं ॥ ३ ॥
त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतं ।
त्रिर्नांद्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतं ॥ ४ ॥
त्रिर्नो रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः ।
त्रिः सौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरे दुहितारुहद्रथं ॥ ५ ॥
त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः ।
ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ॥ ६ ॥
त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतं ।
तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतं ॥ ७ ॥

अनु । स्वधां । अक्षरन् । आपः । अस्य । अवर्धत । मध्ये । आ । नाव्यानां ।
सध्रीचीनेन । मनसा । तं । इंद्रः । ओजिष्ठेन । हन्मना । अहन् । अभि । द्यून् ॥
नि । अविध्यत् । इलीबिशस्य । दृळ्हा । वि । शृंगिणं । अभिनत् । शुष्णं । इंद्रः ।
यावत् । तरः । मघऽवन् । यावत् । ओजः । वज्रेण । शत्रुं । अवधीः । पृतन्युं ॥
अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् ।
सं । वज्रेण । असृजत् । वृत्रं । इंद्रः । प्र । स्वां । मतिं । अतिरत् । शाशदानः ॥
आवः । कुत्सं । इंद्र । यस्मिन् । चाकन् । प्र । आवः । युध्यंतं । वृषभं । दशऽद्युं ।
शफऽच्युतः । रेणुः । नक्षत । द्यां । उत् । श्वैत्रेयः । नृऽसह्याय । तस्थौ ॥
आवः । शमं । वृषभं । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् । श्वित्र्यं । गां ।
ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् । शत्रुऽयतां । अधरा । वेदना । अकः॰ ॥३॥

---

## ३४

त्रिः । चित् । नः । अद्य । भवतं । नवेदसा । विऽभुः । वां । यामः । उत । रातिः । अश्विना ।
युवोः । हि । यंत्रं । हिम्याऽइव । वाससः । अभिऽआयंसेन्या । भवतं । मनीषिऽभिः ॥
त्रयः । पवयः । मधुऽवाहने । रथे । सोमस्य । वेनां । अनु । विश्वे । इत् । विदुः ।
त्रयः । स्कंभासः । स्कभितासः । आऽरभे । त्रिः । नक्तं । याथः । त्रिः । ऊं॰ । अश्विना । दिवा ॥
समाने । अहन् । त्रिः । अवद्यऽगोहना । त्रिः । अद्य । यज्ञं । मधुना । मिमिक्षतं ।
त्रिः । वाजऽवतीः । इषः । अश्विना । युवं । दोषाः । अस्मभ्यं । उषसः । च । पिन्वतं ॥
त्रिः । वर्तिः । यातं । त्रिः । अनुऽव्रते । जने । त्रिः । सुप्रऽअव्ये । त्रेधाऽइव । शिक्षतं ।
त्रिः । नांद्यं । वहतं । अश्विना । युवं । त्रिः । पृक्षः । अस्मे॰ । अक्षराऽइव । पिन्वतं ॥
त्रिः । नः । रयिं । वहतं । अश्विना । युवं । त्रिः । देवऽताता । त्रिः । उत । अवतं । धियः ।
त्रिः । सौभगऽत्वं । त्रिः । उत । श्रवांसि । नः । त्रिऽस्थं । वां । सूरे । दुहिता । आ । रुहत् । रथं ॥
त्रिः । नः । अश्विना । दिव्यानि । भेषजा । त्रिः । पार्थिवानि । त्रिः । ऊं॰ । दत्तं । अत्ऽभ्यः ।
ओमानं । शंऽयोः । ममकाय । सूनवे । त्रिऽधातु । शर्म । वहतं । शुभः । पती॰ ॥ ४ ॥
त्रिः । नः । अश्विना । यजता । दिवेऽदिवे । परि । त्रिऽधातु । पृथिवीं । अशायतं ।
तिस्रः । नासत्या । रथ्या । पराऽवतः । आत्माऽइव । वातः । स्वसराणि । गच्छतं ॥

त्रिरश्विना सिंधुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतं ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितं ॥ ८ ॥
क्व१त्री चक्रा त्रिवृतो रथस्य क्व१त्रयो वंधुरो ये सनीळाः ।
कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः ॥ ९ ॥
आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः ।
युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवंतमिष्यति ॥ १० ॥
आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥ ११ ॥
आ नो अश्विना त्रिवृता रथेनार्वांचं रयिं वहतं सुवीरं ।
शृण्वंता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥ १२ ॥

---

## ३५

ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहावसे ।
ह्वयामि रात्रीं जगतो निवेशनीं ह्वयामि देवं सवितारमूतये ॥ १ ॥
आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ २ ॥
याति देवः प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरिभ्यां ।
आ देवो याति सविता परावतोऽप विश्वा दुरिता बाधमानः ॥ ३ ॥
अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहंतं ।
आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः ॥ ४ ॥
वि जनान् छ्यावाः शितिपादो अख्यन्रथं हिरण्यप्रउगं वहंतः ।
शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥ ५ ॥
तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।
आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥ ६ ॥
वि सुपर्णो अंतरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः ।
क्वेदानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ॥ ७ ॥

त्रिः। अश्विना। सिंधुऽभिः। सप्तमातृऽभिः। त्रयः। आऽहावाः। त्रेधा। हविः। कृतं।
तिस्रः। पृथिवीः। उपरि। प्रवा। दिवः। नाकं। रक्षेथे॰। द्युऽभिः। अक्तुऽभिः। हितं॥
क्व। त्री। चक्रा। त्रिऽवृतः। रथस्य। क्व। त्रयः। वंधुरः। ये। सऽनीळाः।
कदा। योगः। वाजिनः। रासभस्य। येन। यज्ञं। नासत्या। उपऽयाथः॥
आ। नासत्या। गच्छतं। हूयते। हविः। मध्वः। पिबतं। मधुऽपेभिः। आसऽभिः।
युवोः। हि। पूर्वं। सविता। उषसः। रथं। ऋताय। चित्रं। घृतऽवंतं। इष्यति॥
आ। नासत्या। त्रिऽभिः। एकादशैः। इह। देवेभिः। यातं। मधुऽपेयं। अश्विना।
प्र। आयुः। तारिष्टं। निः। रपांसि। मृक्षतं। सेधतं। द्वेषः। भवतं। सचाऽभुवा॥
आ। नः। अश्विना। त्रिऽवृता। रथेन। अर्वांचं। रयिं। वहतं। सुऽवीरं।
शृखंता। वां। अवसे। जोहवीमि। वृधे। च। नः। भवतं। वाजऽसातौ॥ ५॥

---

३५

ह्वयामि। अग्निं। प्रथमं। स्वस्तये। ह्वयामि। मित्रावरुणौ। इह। अवसे।
ह्वयामि। रात्रीं। जगतः। निऽवेशनीं। ह्वयामि। देवं। सवितारं। ऊतये॥
आ। कृष्णेन। रजसा। वर्तमानः। निऽवेशयन्। अमृतं। मर्त्यं। च।
हिरण्ययेन। सविता। रथेन। आ। देवः। याति। भुवनानि। पश्यन्॥
याति। देवः। प्रऽवता। याति। उत्ऽवता। याति। शुभ्राभ्यां। यजतः। हरिऽभ्यां।
आ। देवः। याति। सविता। पराऽवतः। अप। विश्वा। दुःऽइता। बाधमानः॥
अभिऽवृतं। कृशनैः। विश्वऽरूपं। हिरण्यऽशम्यं। यजतः। बृहंतं।
आ। अस्थात्। रथं। सविता। चित्रऽभानुः। कृष्णा। रजांसि। तविषीं। दधानः॥
वि। जनान्। श्यावाः। शितिऽपादः। अख्यन्। रथं। हिरण्यऽप्रउगं। वहंतः।
शश्वत्। विशः। सवितुः। दैव्यस्य। उपऽस्थे। विश्वा। भुवनानि। तस्थुः॥
तिस्रः। द्यावः। सवितुः। द्वौ। उपऽस्था। एका। यमस्य। भुवने। विराषाट्।
आणिं। न। रथ्यं। अमृता। अधि। तस्थुः। इह। ब्रवीतु। यः। ऊं॰। तत्। चिकेतत्॥ ६॥
वि। सुऽपर्णः। अंतरिक्षाणि। अख्यत्। गभीरऽवेपाः। असुरः। सुऽनीथः।
क्व। इदानीं। सूर्यः। कः। चिकेत। कतमां। द्यां। रश्मिः। अस्य। आ। ततान॥

अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिंधून् ।
हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ॥ ८ ॥
हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अंतरीयते ।
अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥ ९ ॥
हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् ।
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥ १० ॥
ये ते पंथाः सवितः पूर्व्यासोऽरेणवः सुकृता अंतरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥ ११ ॥ ७ ॥

---

३६

प्र वो यह्वं पुरूणां विशां देवयतीनां ।
अग्निं सूक्तेभिर्वचोभिरीमहे यं सीमिदन्य ईळते ॥ १ ॥
जनासो अग्निं दधिरे सहोवृधं हविष्मंतो विधेम ते ।
स त्वं नो अद्य सुमना इहाविता भवा वाजेषु संत्य ॥ २ ॥
प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसं ।
महस्ते सतो वि चरंत्यर्चयो दिवि स्पृशंति भानवः ॥ ३ ॥
देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिंधते ।
विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ॥ ४ ॥
मंद्रो होता गृहपतिरग्ने दूतो विशामसि ।
त्वे विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥ ५ ॥
त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः ।
स त्वं नो अद्य सुमना उतापरं यक्षि देवान्त्सुवीर्या ॥ ६ ॥
तं घेमित्था नमस्विन उप स्वराजमासते ।
होत्राभिरग्निं मनुषः समिंधते तितिर्वांसो अति स्रिधः ॥ ७ ॥
घ्नंतो वृत्रमतरन्रोदसी अप उरु क्षयाय चक्रिरे ।
भुवत्कण्वे वृषा द्युम्न्याहुतः क्रंदश्वो गविष्टिषु ॥ ८ ॥

५६

एषः। प्र। पूर्वीः। अव। तस्य। चम्रिषः। अत्यः। न। योषां। उत्। अयंस्त। भुर्वणिः।
दक्षं। मुहे। पायुयते। हिरुण्ययं। रथं। आऽवृत्यं। हरिंऽयोगं। ऋभ्वसं॥
तं। गूर्तयः। नेमन्ऽइषः। परीणसः। सुमुद्रं। न। संऽचरणे। सनिष्यवः।
पतिं। दक्षस्य। विदथस्य। नु। सहः। गिरिं। न। वेनाः। अधि। रोह। तेजसा॥
सः। तुर्वणिः। महान्। अरेणु। पौंस्ये। गिरेः। भृष्टिः। न। भ्राजते। तुजा। शवः।
येन। शुष्णं। मायिनं। आयसः। मदे। दुध्रः। आभूषु। रमयत्। नि। दामनि॥
देवी। यदि। तविषी। त्वाऽवृधा। ऊतये। इंद्रं। सिसक्ति। उषसं। न। सूर्यः।
यः। धृष्णुना। शवसा। बाधते। तमः। इयर्ति। रेणुं। बृहत्। अर्हरिऽस्वनिः॥
वि। यत्। तिरः। धरुणं। अच्युतं। रजः। अतिऽस्थिपः। दिवः। आतासु। बर्हणा।
स्वःऽमीळ्हे। यत्। मदे। इंद्र। हर्ष्या। अहन्। वृत्रं। निः। अपां। औब्जः। अर्णवं॥
त्वं। दिवः। धरुणं। धिषे। ओजसा। पृथिव्याः। इंद्र। सदनेषु। माहिनः।
त्वं। सुतस्य। मदे। अरिणाः। अपः। वि। वृत्रस्य। समया। पाष्या। अरुजः॥ २१॥

---

५७

प्र। मंहिष्ठाय। बृहते। बृहत्ऽरये। सत्यऽशुष्माय। तवसे। मतिं। भरे।
अपांऽइव। प्रवणे। यस्य। दुःऽधरं। राधः। विश्वऽआयु। शवसे। अपऽवृतं॥
अध। ते। विश्वं। अनु। ह। असत्। इष्टये। आपः। निम्नाऽइव। सवना। हविष्मतः।
यत्। पर्वते। न। संऽअशीत। हर्यतः। इंद्रस्य। वज्रः। श्नथिता। हिरण्ययः॥
अस्मै। भीमाय। नमसा। सं। अध्वरे। उषः। न। शुभ्रे। आ। भर। पनीयसे।
यस्य। धाम। श्रवसे। नाम। इंद्रियं। ज्योतिः। अकारि। हरितः। न। अयसे॥
इमे। ते। इंद्र। ते। वयं। पुरुऽस्तुत। ये। त्वा। आऽरभ्य। चरामसि। प्रभुऽवसो इति प्रभुऽवसो।
नहि। त्वत्। अन्यः। गिर्वणः। गिरः। सघत्। क्षोणीःऽइव। प्रति। नः। हर्य। तत्। वचः॥
भूरि। ते। इंद्र। वीर्यं। तव। स्मसि। अस्य। स्तोतुः। मघऽवन्। कामं। आ। पृण।
अनु। ते। द्यौः। बृहती। वीर्यं। ममे। इयं। च। ते। पृथिवी। नेमे। ओजसे॥
त्वं। तं। इंद्र। पर्वतं। महां। उरुं। वज्रेण। वज्रिन्। पर्वऽशः। चकर्तिथ।
अव। असृजः। निऽवृताः। सर्तवै। अपः। सत्रा। विश्वं। दधिषे। केवलं। सहः॥ २२॥

---

५८

नू चित्सहोजा अमृतो नि तुंदते होता यद्दूतो अभवद्विवस्वतः ।
वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ॥ १ ॥
आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति ।
अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्नचिक्रदत् ॥ २ ॥
क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः ।
रथो न विक्ष्वृंजसान आयुषु व्यानुषग्वार्या देव ऋण्वति ॥ ३ ॥
वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः ।
तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ॥ ४ ॥
तपुर्जंभो वन आ वातचोदितो यूथे न साह्वाँ अव वाति वंसगः ।
अभिव्रजन्नक्षितं पाजसा रजः स्थातुश्चरथं भयते पतत्रिणः ॥ ५ ॥
दधुष्ट्वा भृगवो मानुषेष्वा रयिं न चारुं सुहवं जनेभ्यः ।
होतारमग्ने अतिथिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ॥ ६ ॥
होतारं सप्त जुह्वो३ यजिष्ठं यं वाघतो वृणते अध्वरेषु ।
अग्निं विश्वेषामरतिं वसूनां सपर्यामि प्रयसा यामि रत्नं ॥ ७ ॥
अच्छिद्रा सूनो सहसो नो अद्य स्तोतृभ्यो मित्रमहः शर्म यच्छ ।
अग्ने गृणंतमंहस उरुष्योर्जो नपात्पूर्भिरायसीभिः ॥ ८ ॥
भवा वरूथं गृणते विभावो भवा मघवन्मघवद्भ्यः शर्म ।
उरुष्याग्ने अंहसो गृणंतं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ९ ॥

---

५९

वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयंते ।
वैश्वानर नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययंथ ॥ १ ॥
मूर्द्धा दिवो नाभिरग्निः पृथिव्या अथाभवदरती रोदस्योः ।
तं त्वा देवासोऽजनयंत देवं वैश्वानर ज्योतिरिदार्याय ॥ २ ॥
आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि ।
या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा ॥ ३ ॥

५८

नु। चित्। सहःऽजाः। अमृतः। नि। तुंदते। होता। यत्। दूतः। अभवत्। विवस्वतः।
वि। साधिष्ठेभिः। पथिऽभिः। रजः। ममे। आ। देवऽताता। हविषा। विवासति॥
आ। स्वं। अद्म। युवमानः। अजरः। तृषु। अविष्यन्। अतसेषु। तिष्ठति।
अत्यः। न। पृष्ठं। प्रुषितस्य। रोचते। दिवः। न। सानु। स्तनयन्। अचिक्रदत्॥
क्राणा। रुद्रेभिः। वसुऽभिः। पुरःऽहितः। होता। निऽसत्तः। रयिषाट्। अमर्त्यः।
रथः। न। विक्षु। ऋंजसानः। आयुषु। वि। आनुषक्। वार्या। देवः। ऋण्वति॥
वि। वातऽजूतः। अतसेषु। तिष्ठते। वृथा। जुहूभिः। सृण्या। तुविऽस्वनिः।
तृषु। यत्। अग्ने। वनिनः। वृषऽयसे। कृष्णं। ते। एम। रुशत्ऽऊर्मे। अजर॥
तपुःऽजंभः। वने। आ। वातऽचोदितः। यूथे। न। सह्वान्। अव। वाति। वंसगः।
अभिऽव्रजन्। अक्षितं। पाजसा। रजः। स्थातुः। चरथं। भयते। पतत्रिणः॥ २३॥
दधुः। त्वा। भृगवः। मानुषेषु। आ। रयिं। न। चारुं। सुऽहवं। जनेभ्यः।
होतारं। अग्ने। अतिथिं। वरेण्यं। मित्रं। न। शेवं। दिव्याय। जन्मने॥
होतारं। सप्त। जुह्वः। यजिष्ठं। यं। वाघतः। वृणते। अध्वरेषु।
अग्निं। विश्वेषां। अरतिं। वसूनां। सपर्यामि। प्रयसा। यामि। रत्नं॥
अच्छिद्रा। सूनो॰। सहसः। नः। अद्य। स्तोतृऽभ्यः। मित्रऽमहः। शर्म। यच्छ।
अग्ने। गृणंतं। अंहसः। उरुष्य। ऊर्जः। नपात्। पूःऽभिः। आयसीभिः॥
भव। वरूथं। गृणते। विभाऽवः। भव। मघऽवन्। मघवत्ऽभ्यः। शर्म।
उरुष्य। अग्ने। अंहसः। गृणंतं। प्रातः। मक्षु। धियाऽवसुः। जगम्यात्॥ २४॥

---

५९

वयाः। इत्। अग्ने। अग्नयः। ते। अन्ये। त्वे॰। विश्वे। अमृताः। मादयंते।
वैश्वानर। नाभिः। असि। क्षितीनां। स्थूणाऽइव। जनान्। उपऽमित्। ययंथ॥
मूर्द्धा। दिवः। नाभिः। अग्निः। पृथिव्याः। अथ। अभवत्। अरतिः। रोदस्योः।
तं। त्वा। देवासः। अजनयंत। देवं। वैश्वानर। ज्योतिः। इत्। आर्याय॥
आ। सूर्ये। न। रश्मयः। ध्रुवासः। वैश्वानरे। दधिरे। अग्ना। वसूनि।
या। पर्वतेषु। ओषधीषु। अप्ऽसु। या। मानुषेषु। असि। तस्य। राजा॥

बृहती इव सूनवे रोदसी गिरो होता मनुष्यो३न दक्षः ।
स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय यह्वीः ॥ ४ ॥
दिवश्चित्ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वं ।
राजा कृष्टीनामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ ॥ ५ ॥
प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचंते ।
वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव शंबरं भेत् ॥ ६ ॥
वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा ।
शातवनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान् ॥ ७ ॥

---

६०

वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थं ।
द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा ॥ १ ॥
अस्य शासुरुभयासः सचंते हविष्मंत उशिजो ये च मर्ताः ।
दिवश्चित्पूर्वो न्यसादि होतापृच्छ्यो विश्पतिर्विक्षु वेधाः ॥ २ ॥
तं नव्यसी हृद आ जायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।
यमृत्विजो वृजने मानुषासः प्रयस्वंत आयवो जीजनंत ॥ ३ ॥
उशिक्पावको वसुर्मानुषेषु वरेण्यो होताधायि विक्षु ।
दमूना गृहपतिर्दम आँ अग्निर्भुवद्रयिपती रयीणां ॥ ४ ॥
तं त्वा वयं पतिमग्ने रयीणां प्र शंसामो मतिभिर्गोतमासः ।
आशुं न वाजंभरं मर्जयंतः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ५ ॥

---

६१

अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय ।
ऋचीषमायाध्रिगव ओहमिंद्राय ब्रह्माणि राततमा ॥ १ ॥
अस्मा इदु प्रय इव प्र यंसि भराम्यांगूषं बाधे सुवृक्ति ।
इंद्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियो मर्जयंत ॥ २ ॥

बृहतीऽइव॰। सूनवे। रोदसी॰। गिरः। होता। मनुष्यः। न। दक्षः।
स्वःऽवते। सत्यऽशुष्माय। पूर्वीः। वैश्वानराय। नृऽतमाय। यह्वीः॥
दिवः। चित्। ते। बृहतः। जातऽवेदः। वैश्वानर। प्र। रिरिचे। महिऽत्वं।
राजा। कृष्टीनां। असि। मानुषीणां। युधा। देवेभ्यः। वरिवः। चकर्थ॥
प्र। नु। महिऽत्वं। वृषभस्य। वोचं। यं। पूरवः। वृत्रऽहनं। सचंते।
वैश्वानरः। दस्युं। अग्निः। जघन्वान्। अधूनोत्। काष्ठाः। अव। शंबरं। भेत्॥
वैश्वानरः। महिम्ना। विश्वऽकृष्टिः। भरत्ऽवाजेषु। यजतः। विभाऽवा।
शातऽवनेये। शतिनीभिः। अग्निः। पुरुऽनीथे। जरते। सूनृताऽवान्॥ २५॥

---

६०

वह्निं। यशसं। विदथस्य। केतुं। सुप्रऽअव्यं। दूतं। सद्यःऽअर्थं।
द्विऽजन्मानं। रयिंऽइव। प्रऽशस्तं। रातिं। भरत्। भृगवे। मातरिश्वा॥
अस्य। शासुः। उभयासः। सचंते। हविष्मंतः। उशिजः। ये। च। मर्ताः।
दिवः। चित्। पूर्वः। नि। असादि। होता। आऽपृच्छ्यः। विश्पतिः। विक्षु। वेधाः॥
तं। नव्यसी। हृदः। आ। जायमानं। अस्मत्। सुऽकीर्तिः। मधुऽजिह्वं। अश्याः।
यं। ऋत्विजः। वृजने। मानुषासः। प्रयस्वंतः। आयवः। जीजनंत॥
उशिक्। पावकः। वसुः। मानुषेषु। वरेण्यः। होता। अधायि। विक्षु।
दमूनाः। गृहऽपतिः। दमे। आ। अग्निः। भुवत्। रयिऽपतिः। रयीणां॥
तं। त्वा। वयं। पतिं। अग्ने। रयीणां। प्र। शंसामः। मतिऽभिः। गोतमासः।
आशुं। न। वाजंऽभरं। मर्जयंतः। प्रातः। मक्षु। धियाऽवसुः। जगम्यात्॥ २६॥

---

६१

अस्मै। इत्। ऊं॰। प्र। तवसे। तुराय। प्रयः। न। हर्मि। स्तोमं। माहिनाय।
ऋचीषमाय। अध्रिऽगवे। ओहं। इंद्राय। ब्रह्माणि। राततमा॥
अस्मै। इत्। ऊं॰। प्रयःऽइव। प्र। यंसि। भरामि। आंगूषं। बाधे। सुऽवृक्ति।
इंद्राय। हृदा। मनसा। मनीषा। प्रत्नाय। पत्ये। धियः। मर्जयंत॥

अस्मा इदु त्यमुपमं स्वर्षां भराम्यांगूषमास्येन ।
मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ॥ ३ ॥
अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय ।
गिरश्च गिर्वाहसे सुवृक्तींद्राय विश्वमिन्वं मेधिराय ॥ ४ ॥
अस्मा इदु सप्तिमिव श्रवस्येंद्रायार्कं जुह्वा३ समंजे ।
वीरं दानौकसं वंदध्यै पुरां गूर्तश्रवसं दर्माणं ॥ ५ ॥
अस्मा इदु त्वष्टा तक्षद्वज्रं स्वपस्तमं स्वर्यं१ रणाय ।
वृत्रस्य चिद्विदद्येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥ ६ ॥
अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवान् चार्वन्ना ।
मुषायद्विष्णुः पचतं सहीयान्विध्यद्वराहं तिरो अद्रिमस्ता ॥ ७ ॥
अस्मा इदु ग्नाश्चिद्देवपत्नीरिंद्रायार्कमहिहत्य ऊवुः ।
परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ॥ ८ ॥
अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यंतरिक्षात् ।
स्वराळिंद्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥ ९ ॥
अस्येदेव शवसा शुषंतं वि वृश्चद्वज्रेण वृत्रमिंद्रः ।
गा न व्राणा अवनीरमुंचदभि श्रवो दावने सचेताः ॥ १० ॥
अस्येदु त्वेषसा रंत सिंधवः परि यद्वज्रेण सीमयच्छत् ।
ईशानकृद्दाशुषे दशस्यन्तुर्वीतये गाधं तुर्वणिः कः ॥ ११ ॥
अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥ १२ ॥
अस्येदु प्र ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्य उक्थैः ।
युधे यदिष्णान आयुधान्यृघायमाणो निरिणाति शत्रून् ॥ १३ ॥
अस्येदु भिया गिरयश्च दृळ्हा द्यावा च भूमा जनुषस्तुजेते ।
उपो वेनस्य जोगुवान ओणिं सद्यो भुवद्वीर्याय नोधाः ॥ १४ ॥
अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः ।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिंद्रः ॥ १५ ॥
एवा ते हरियोजना सुवृक्तींद्र ब्रह्माणि गोतमासो अक्रन् ।
ऐषु विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १६ ॥

अस्मै । इत् । ऊं॰ । त्यं । उपऽमं । स्वःऽसां । भरामि । आंगूषं । आस्येन ।
मंहिष्ठं । अच्छोक्तिऽभिः । मतीनां । सुवृक्तिऽभिः । सूरिं । ववृधध्यै ॥
अस्मै । इत् । ऊं॰ । स्तोमं । सं । हिनोमि । रथं । न । तष्टाऽइव । तत्ऽसिनाय ।
गिरः । च । गिर्वाहसे । सुऽवृक्ति । इंद्राय । विश्वंऽइन्वं । मेधिराय ॥
अस्मै । इत् । ऊं॰ । सप्तिंऽइव । श्रवस्या । इंद्राय । अर्कं । जुह्वा । सं । अंजे ।
वीरं । दानऽओकसं । वंदध्यै । पुरां । गूर्तऽश्रवसं । दर्माणं ॥ २७ ॥
अस्मै । इत् । ऊं॰ । त्वष्टा । तक्षत् । वज्रं । स्वपःऽतमं । स्वर्यं । रणाय ।
वृत्रस्य । चित् । विदत् । येन । मर्म । तुजन् । ईशानः । तुजता । कियेधाः ॥
अस्य । इत् । ऊं॰ । मातुः । सवनेषु । सद्यः । महः । पितुं । पपिऽवान् । चारु । अन्ना ।
मुषायत् । विष्णुः । पचतं । सहीयान् । विध्यत् । वराहं । तिरः । अद्रिं । अस्ता ॥
अस्मै । इत् । ऊं॰ । ग्नाः । चित् । देवऽपत्नीः । इंद्राय । अर्कं । अहिऽहत्ये । ऊवुः॰ ।
परि । द्यावापृथिवी॰ । जभ्रे । उर्वी॰ । न । अस्य । ते॰ । महिमानं । परि । स्तः॰ ॥
अस्य । इत् । एव । प्र । रिरिचे । महिऽत्वं । दिवः । पृथिव्याः । परि । अंतरिक्षात् ।
स्वऽराट् । इंद्रः । दमे । आ । विश्वऽगूर्तः । सुऽअरिः । अमत्रः । ववक्षे । रणाय ॥
अस्य । इत् । एव । शवसा । शुषंतं । वि । वृश्चत् । वज्रेण । वृत्रं । इंद्रः ।
गाः । न । व्राणाः । अवनीः । अमुंचत् । अभि । श्रवः । दावने । सऽचेताः ॥ २८ ॥
अस्य । इत् । ऊं॰ । त्वेषसा । रंत । सिंधवः । परि । यत् । वज्रेण । सीं । अयच्छत् ।
ईशानऽकृत् । दाशुषे । दशस्यन् । तुर्वीतये । गाधं । तुर्वणिः । कः॰ ॥
अस्मै । इत् । ऊं॰ । प्र । भर । तूतुजानः । वृत्राय । वज्रं । ईशानः । कियेधाः ।
गोः । न । पर्व । वि । रद । तिरश्चा । इष्यन् । अर्णांसि । अपां । चरध्यै ॥
अस्य । इत् । ऊं॰ । प्र । ब्रूहि । पूर्व्याणि । तुरस्य । कर्माणि । नव्यः । उक्थैः ।
युधे । यत् । इष्णानः । आयुधानि । ऋघायमाणः । निऽरिणाति । शत्रून् ॥
अस्य । इत् । ऊं॰ । भिया । गिरयः । च । दृळ्हाः । द्यावा । च । भूम । जनुषः । तुजेते॰ ।
उपो॰ । वेनस्य । जोगुवानः । ओणिं । सद्यः । भुवत् । वीर्याय । नोधाः ॥
अस्मै । इत् । ऊं॰ । त्यत् । अनु । दायि । एषां । एकः । यत् । वव्ने । भूरेः । ईशानः ।
प्र । एतशं । सूर्ये । पस्पृधानं । सौवश्व्ये । सुस्विं । आवत् । इंद्रः ॥
एव । ते । हरिऽयोजन । सुऽवृक्ति । इंद्र । ब्रह्माणि । गोतमासः । अक्रन् ।
आ । एषु । विश्वऽपेशसं । धियं । धाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ २९ ॥ ४ ॥

६२

प्र मन्महे शवसानाय शूषमांगूषं गिर्वणसे अंगिरस्वत् ।
सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १ ॥
प्र वो महे महि नमो भरध्वमांगूष्यं शवसानाय साम ।
येना नः पूर्वे पितरः पदज्ञा अर्चंतो अंगिरसो गा अविंदन् ॥ २ ॥
इंद्रस्यांगिरसां चेष्टौ विदत्सरमा तनयाय धासिं ।
बृहस्पतिर्भिनदद्रिं विदद्गाः समुस्रियाभिर्वावशंत नरः ॥ ३ ॥
स सुष्टुभा स स्तुभा सप्त विप्रैः स्वरेणाद्रिं स्वर्यो३ नवग्वैः ।
सरण्युभिः फलिगमिंद्र शक्र वलं रवेण दरयो दशग्वैः ॥ ४ ॥
गृणानो अंगिरोभिर्दस्म वि वरुषसा सूर्येण गोभिरंधः ।
वि भूम्या अप्रथय इंद्र सानु दिवो रज उपरमस्तभायः ॥ ५ ॥
तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः ।
उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्य१श्चतस्रः ॥ ६ ॥
द्विता वि वव्रे सनजा सनीळे अयास्यः स्तवमानेभिरर्कैः ।
भगो न मेने परमे व्योमन्नधारयद्रोदसी सुदंसाः ॥ ७ ॥
सनाद्दिवं परि भूमा विरूपे पुनर्भुवा युवती स्वेभिरेवैः ।
कृष्णेभिरक्तोषा रुशद्भिर्वपुर्भिरा चरतो अन्यान्या ॥ ८ ॥
सनेमि सख्यं स्वपस्यमानः सूनुर्दाधार शवसा सुदंसाः ।
आमासु चिद्दधिषे पक्वमंतः पयः कृष्णासु रुशद्रोहिणीषु ॥ ९ ॥
सनात्सनीळा अवनीरवाता व्रता रक्षंते अमृताः सहोभिः ।
पुरू सहस्रा जनयो न पत्नीर्दुवस्यंति स्वसारो अह्रयाणं ॥ १० ॥
सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः ।
पतिं न पत्नीरुशतीरुशंतं स्पृशंति त्वा शवसावन्मनीषाः ॥ ११ ॥
सनादेव तव रायो गभस्तौ न क्षीयंते नोप दस्यंति दस्म ।
द्युमाँ असि क्रतुमाँ इंद्र धीरः शिक्षा शचीवस्तव नः शचीभिः ॥ १२ ॥
सनायते गोतम इंद्र नव्यमतक्षद्ब्रह्म हरियोजनाय ।
सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १३ ॥

६२

प्र। मन्महे। शवसानाय। शूषं। आंगूषं। गिर्वणसे। अंगिरस्वत्।
सुवृक्तिऽभिः। स्तुवते। ऋग्मियाय। अर्चाम। अर्कं। नरे। विऽश्रुताय॥
प्र। वः। महे। महि। नमः। भरध्वं। आंगूष्यं। शवसानाय। साम।
येन। नः। पूर्वे। पितरः। पदऽज्ञाः। अर्चंतः। अंगिरसः। गाः। अविंदन्॥
इंद्रस्य। अंगिरसां। च। इष्टौ। विदत्। सरमा। तनयाय। धासिं।
बृहस्पतिः। भिनत्। अद्रिं। विदत्। गाः। सं। उस्रियाभिः। वावशंत। नरः॥
सः। सुऽस्तुभा। सः। स्तुभा। सप्त। विप्रैः। स्वरेण। अद्रिं। स्वर्यः। नवऽग्वैः।
सरण्युऽभिः। फलिऽगं। इंद्र। शक्र। वलं। रवेण। दरयः। दशऽग्वैः॥
गृणानः। अंगिरःऽभिः। दस्म। वि। वः। उषसा। सूर्येण। गोभिः। अंधः।
वि। भूम्याः। अप्रथयः। इंद्र। सानु। दिवः। रजः। उपरं। अस्तभायः॥ १॥
तत्। ऊं॰। प्रयक्षऽतमं। अस्य। कर्म। दस्मस्य। चारुऽतमं। अस्ति। दंसः।
उपऽह्वरे। यत्। उपराः। अपिन्वत्। मधुऽअर्णसः। नद्यः। चतस्रः॥
द्विता। वि। वव्रे। सनऽजा। सऽनीळे॰। अयास्यः। स्तवमानेभिः। अर्कैः।
भगः। न। मेने॰। परमे। विऽओमन्। अधारयत्। रोदसी॰। सुऽदंसाः॥
सनात्। दिवं। परि। भूम। विऽरूपे॰। पुनःऽभुवा। युवती॰। स्वेभिः। एवैः।
कृष्णेभिः। अक्ता। उषाः। रुशत्ऽभिः। वपुःऽभिः। आ। चरतः। अन्याऽअन्या॥
सनेमि। सख्यं। सुऽअपस्यमानः। सूनुः। दाधार। शवसा। सुऽदंसाः।
आमासु। चित्। दधिषे। पक्वं। अंतः॰। पयः। कृष्णासु। रुशत्। रोहिणीषु॥
सनात्। सऽनीळाः। अवनीः। अवाताः। व्रता। रक्षंते। अमृताः। सहःऽभिः।
पुरु। सहस्रा। जनयः। न। पत्नीः। दुवस्यंति। स्वसारः। अह्रयाणं॥ २॥
सनाऽयुवः। नमसा। नव्यः। अर्कैः। वसुऽयवः। मतयः। दस्म। दद्रुः।
पतिं। न। पत्नीः। उशतीः। उशंतं। स्पृशंति। त्वा। शवसाऽवन्। मनीषाः॥
सनात्। एव। तव। रायः। गभस्तौ। न। क्षीयंते। न। उप। दस्यंति। दस्म।
द्युऽमान्। असि। क्रतुऽमान्। इंद्र। धीरः। शिक्ष। शचीऽवः। तव। नः। शचीभिः॥
सनाऽयते। गोतमः। इंद्र। नव्यं। अतक्षत्। ब्रह्म। हरिऽयोजनाय।
सुऽनीथाय। नः। शवसान। नोधाः। प्रातः। मक्षु। धियाऽवसुः। जगम्यात्॥ ३॥

६३

त्वं महाँ इंद्र यो ह शुष्मैर्द्यावा जज्ञानः पृथिवी अमे धाः ।
यद्ध ते विश्वा गिरयश्चिदभ्वा भिया दृळ्हासः किरणा नैजन् ॥ १ ॥
आ यद्धरी इंद्र विव्रता वेरा ते वज्रं जरिता बाह्वोर्धात् ।
येनाविहर्यतक्रतो अमित्रान्पुर इष्णासि पुरुहूत पूर्वीः ॥ २ ॥
त्वं सत्य इंद्र धृष्णुरेतान्त्वमृभुक्षा नर्यस्त्वं षाट् ।
त्वं शुष्णं वृजने पृक्ष आणौ यूने कुत्साय द्युमते सचाहन् ॥ ३ ॥
त्वं ह त्यदिंद्र चोदीः सखा वृत्रं यद्वज्रिन्वृषकर्मन्नुभ्नाः ।
यद्ध शूर वृषमणः पराचैर्वि दस्यूँर्योनावकृतो वृथाषाट् ॥ ४ ॥
त्वं ह त्यदिंद्रारिषण्यन्दृळ्हस्य चिन्मर्तानामजुष्टौ ।
व्य१स्मदा काष्ठा अर्वते वर्घनेव वज्रिञ्छ्नथिह्यमित्रान् ॥ ५ ॥
त्वां ह त्यदिंद्रार्णसातौ स्वर्मीळ्हे नर आजा हवंते ।
तव स्वधाव इयमा समर्य ऊतिर्वाजेष्वतसाय्या भूत् ॥ ६ ॥
त्वं ह त्यदिंद्र सप्त युध्यन्पुरो वज्रिन्पुरुकुत्साय दर्दः ।
बर्हिर्न यत्सुदासे वृथा वर्गंहो राजन्वरिवः पूरवे कः ॥ ७ ॥
त्वं त्यां न इंद्र देव चित्रामिषमापो न पीपयः परिज्मन् ।
यया शूर प्रत्यस्मभ्यं यंसि त्मनमूर्जं न विश्वध क्षरध्यै ॥ ८ ॥
अकारि त इंद्र गोतमेभिर्ब्रह्माण्योक्ता नमसा हरिभ्यां ।
सुपेशसं वाजमा भरा नः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ९ ॥

---

६४

वृष्णे शर्धाय सुमखाय वेधसे नोधः सुवृक्तिं प्र भरा मरुद्भ्यः ।
अपो न धीरो मनसा सुहस्त्यो गिरः समंजे विदथेष्वाभुवः ॥ १ ॥
ते जज्ञिरे दिव ऋष्वास उक्षणो रुद्रस्य मर्या असुरा अरेपसः ।
पावकासः शुचयः सूर्या इव सत्वानो न द्रप्सिनो घोरवर्पसः ॥ २ ॥
युवानो रुद्रा अजरा अभोग्घनो ववक्षुरध्रिगावः पर्वता इव ।
दृळ्हा चिद्विश्वा भुवनानि पार्थिवा प्र च्यावयंति दिव्यानि मज्मना ॥ ३ ॥

६३

त्वं। महान्। इंद्र। यः। ह। शुष्मैः। द्यावा। जज्ञानः। पृथिवी॰। अमे। धाः।
यत्। ह। ते। विश्वा। गिरयः। चित्। अभ्वा। भिया। दृळ्हासः। किरणाः। न। ऐजन्॥
आ। यत्। हरी॰। इंद्र। विऽव्रता। वेः। आ। ते। वज्रं। जरिता। बाह्वोः। धात्।
येन। अविहर्यतऽक्रतो॰। अमित्रान्। पुरः। इष्णासि। पुरुऽहूत। पूर्वीः॥
त्वं। सत्यः। इंद्र। धृष्णुः। एतान्। त्वं। ऋभुक्षाः। नर्यः। त्वं। षाट्।
त्वं। शुष्णं। वृजने। पृक्षे। आणौ। यूने। कुत्साय। द्युऽमते। सचा। अहन्॥
त्वं। ह। त्यत्। इंद्र। चोदीः। सखा। वृत्रं। यत्। वज्रिन्। वृषऽकर्मन्। उभ्नाः।
यत्। ह। शूर। वृषऽमनः। पराचैः। वि। दस्यून्। योनौ। अकृतः। वृथाषाट्॥
त्वं। ह। त्यत्। इंद्र। अरिषण्यन्। दृळ्हस्य। चित्। मर्तानां। अजुष्टौ।
वि। अस्मत्। आ। काष्ठाः। अर्वते। वः। घनाऽइव। वज्रिन्। श्नथिहि। अमित्रान्॥४॥
त्वां। ह। त्यत्। इंद्र। अर्णऽसातौ। स्वःऽमीळ्हे। नरः। आजा। हवंते।
तव। स्वधाऽवः। इयं। आ। सऽमर्ये। ऊतिः। वाजेषु। अतसाय्या। भूत्॥
त्वं। ह। त्यत्। इंद्र। सप्त। युध्यन्। पुरः। वज्रिन्। पुरुऽकुत्साय। दर्दः॰।
बर्हिः। न। यत्। सुऽदासे। वृथा। वर्क्। अंहोः। राजन्। वरिवः। पूरवे। कः॰॥
त्वं। त्यां। नः। इंद्र। देव। चित्रां। इषं। आपः। न। पीपयः। परिऽज्मन्।
यया। शूर। प्रति। अस्मभ्यं। यंसि। त्मनं। ऊर्जं। न। विश्वध। क्षरध्यै॥
अकारि। ते। इंद्र। गोतमेभिः। ब्रह्माणि। आऽउक्ता। नमसा। हरिऽभ्यां।
सुऽपेशसं। वाजं। आ। भर। नः। प्रातः। मक्षु। धियाऽवसुः। जगम्यात्॥५॥

---

६४

वृष्णे। शर्धाय। सुऽमखाय। वेधसे। नोधः। सुऽवृक्तिं। प्र। भर। मरुत्ऽभ्यः।
अपः। न। धीरः। मनसा। सुऽहस्त्यः। गिरः। सं। अंजे। विदथेषु। आऽभुवः॥
ते। जज्ञिरे। दिवः। ऋष्वासः। उक्षणः। रुद्रस्य। मर्याः। असुराः। अरेपसः।
पावकासः। शुचयः। सूर्याःऽइव। सत्वानः। न। द्रप्सिनः। घोरऽवर्पसः॥
युवानः। रुद्राः। अजराः। अभोक्ऽहनः। ववक्षुः। अध्रिऽगावः। पर्वताःऽइव।
दृळ्हा। चित्। विश्वा। भुवनानि। पार्थिवा। प्र। च्यवयंति। दिव्यानि। मज्मना॥

चित्रैरंजिभिर्वपुषे व्यंजते वक्षःसु रुक्माँ अधि येतिरे शुभे ।
अंसेष्वेषां नि मिमृक्षुर्ऋष्टयः साकं जज्ञिरे स्वधया दिवो नरः ॥ ४ ॥
ईशानकृतो धुनयो रिशादसो वातान्विद्युतस्तविषीभिरक्रत ।
दुहंत्यूधर्दिव्यानि धूतयो भूमिं पिन्वंति पयसा परिज्रयः ॥ ५ ॥
पिन्वंत्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः ।
अत्यं न मिहे वि नयंति वाजिनमुत्सं दुहंति स्तनयंतमक्षितं ॥ ६ ॥
महिषासो मायिनश्चित्रभानवो गिरयो न स्वतवसो रघुष्यदः ।
मृगा इव हस्तिनः खादथा वना यदारुणीषु तविषीरयुग्ध्वं ॥ ७ ॥
सिंहा इव नानदति प्रचेतसः पिशा इव सुपिशो विश्ववेदसः ।
क्षपो जिन्वंतः पृषतीभिर्ऋष्टिभिः समित्सबाधः शवसाहिमन्यवः ॥ ८ ॥
रोदसी आ वदता गणश्रियो नृषाचः शूराः शवसाहिमन्यवः ।
आ वंधुरेष्वमतिर्न दर्शता विद्युन्न तस्थौ मरुतो रथेषु वः ॥ ९ ॥
विश्ववेदसो रयिभिः समोकसः संमिश्लासस्तविषीभिर्विरप्शिनः ।
अस्तार इषुं दधिरे गभस्त्योरनंतशुष्मा वृषखादयो नरः ॥ १० ॥
हिरण्ययेभिः पविभिः पयोवृध उज्जिघ्नंत आपथ्यो३ न पर्वतान् ।
मखा अयासः स्वसृतो ध्रुवच्युतो दुध्रकृतो मरुतो भ्राजदृष्टयः ॥ ११ ॥
घृषुं पावकं वनिनं विचर्षणिं रुद्रस्य सूनुं हवसा गृणीमसि ।
रजस्तुरं तवसं मारुतं गणमृजीषिणं वृषणं सश्चत श्रिये ॥ १२ ॥
प्र नू स मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत ।
अर्वद्भिर्वाजं भरते धना नृभिरापृच्छ्यं क्रतुमा क्षेति पुष्यति ॥ १३ ॥
चर्कृत्यं मरुतः पृत्सु दुष्टरं द्युमंतं शुष्मं मघवत्सु धत्तन ।
धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं हिमाः ॥ १४ ॥
नू ष्ठिरं मरुतो वीरवंतमृतीषाहं रयिमस्मासु धत्त ।
सहस्रिणं शतिनं शूशुवांसं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १५ ॥ ११ ॥

---

चित्रैः। अंजिऽभिः। वपुषे। वि। अंजते। वक्षःऽसु। रुक्मान्। अधि। येतिरे। शुभे।
अंसेषु। एषां। नि। मिमृक्षुः। ऋष्टयः। साकं। जज्ञिरे। स्वधया। दिवः। नरः॥
ईशानऽकृतः। धुनयः। रिशादसः। वातान्। विऽद्युतः। तविषीभिः। अक्रत।
दुहंति। ऊधः। दिव्यानि। धूतयः। भूमिं। पिन्वंति। पयसा। परिऽज्रयः॥ ६॥
पिन्वंति। अपः। मरुतः। सुऽदानवः। पयः। घृतऽवत्। विदथेषु। आऽभुवः।
अत्यं। न। मिहे। वि। नयंति। वाजिनं। उत्सं। दुहंति। स्तनयंतं। अक्षितं॥
महिषासः। मायिनः। चित्रऽभानवः। गिरयः। न। स्वऽतवसः। रघुऽस्यदः।
मृगाःऽइव। हस्तिनः। खादथ। वना। यत्। आरुणीषु। तविषीः। अयुग्ध्वं॥
सिंहाःऽइव। नानदति। प्रऽचेतसः। पिशाःऽइव। सुऽपिशः। विश्वऽवेदसः।
क्षपः। जिन्वंतः। पृषतीभिः। ऋष्टिऽभिः। सं। इत्। सऽबाधः। शवसा। अहिऽमन्यवः॥
रोदसी॰। आ। वदत। गणऽश्रियः। नृऽसाचः। शूराः। शवसा। अहिऽमन्यवः।
आ। वंधुरेषु। अमतिः। न। दर्शता। विऽद्युत्। न। तस्थौ। मरुतः। रथेषु। वः॥
विश्वऽवेदसः। रयिऽभिः। संऽओकसः। संऽमिश्लासः। तविषीभिः। विऽरप्शिनः।
अस्तारः। इषुं। दधिरे। गभस्त्योः। अनंतऽशुष्माः। वृषऽखादयः। नरः॥ ७॥
हिरण्ययेभिः। पविऽभिः। पयःऽवृधः। उत्। जिघ्नंते। आऽपथ्यः। न। पर्वतान्।
मखाः। अयासः। स्वऽसृतः। ध्रुवऽच्युतः। दुध्रऽकृतः। मरुतः। भ्राजत्ऽऋष्टयः॥
घृषुं। पावकं। वनिनं। विऽचर्षणिं। रुद्रस्य। सूनुं। हवसा। गृणीमसि।
रजःऽतुरं। तवसं। मारुतं। गणं। ऋजीषिणं। वृषणं। सश्चत। श्रिये॥
प्र। नु। सः। मर्तः। शवसा। जनान्। अति। तस्थौ। वः। ऊती। मरुतः। यं। आवत।
अर्वत्ऽभिः। वाजं। भरते। धना। नृऽभिः। आऽपृच्छ्यं। क्रतुं। आ। क्षेति। पुष्यति॥
चर्कृत्यं। मरुतः। पृत्ऽसु। दुस्तरं। द्युऽमंतं। शुष्मं। मघवत्ऽसु। धत्तन।
धनऽस्पृतं। उक्थ्यं। विश्वऽचर्षणिं। तोकं। पुष्येम। तनयं। शतं। हिमाः॥
नु। स्थिरं। मरुतः। वीरऽवंतं। ऋतिऽसहं। रयिं। अस्मासु। धत्त।
सहस्रिणं। शतिनं। शूशुऽवांसं। प्रातः। मक्षु। धियाऽवसुः। जगम्यात्॥ ८॥

---

६५

पश्वा न तायुं गुहा चतंतं नमो युजानं नमो वहंतं ।
सजोषा धीराः पदैरनु ग्मन्नुप त्वा सीदन्विश्वे यजत्राः ॥ १ ॥
ऋतस्य देवा अनु व्रता गुर्भुवत्परिष्टिर्द्यौर्न भूम ।
वर्धंतीमापः पन्वा सुशिश्विमृतस्य योना गर्भे सुजातं ॥ २ ॥
पुष्टिर्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शंभु ।
अत्यो नाज्मन्त्सर्गप्रतक्तः सिंधुर्न क्षोदः क ईं वराते ॥ ३ ॥
जामिः सिंधूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति ।
यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः ॥ ४ ॥
श्वसित्यप्सु हंसो न सीदन् क्रत्वा चेतिष्ठो विशामुषर्भुत् ।
सोमो न वेधा ऋतप्रजातः पशुर्न शिश्वा विभुर्दूरेभाः ॥ ५ ॥

---

६६

रयिर्न चित्रा सूरो न संदृगायुर्न प्राणो नित्यो न सूनुः ।
तक्वा न भूर्णिर्वना सिषक्ति पयो न धेनुः शुचिर्विभावा ॥ १ ॥
दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानां ।
ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो वयो दधाति ॥ २ ॥
दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै ।
चित्रो यदभ्राट् श्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु ॥ ३ ॥
सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका ।
यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनां ॥ ४ ॥
तं वश्चराथा वयं वसत्यास्तं न गावो नक्षंत इद्धं ।
सिंधुर्न क्षोदः प्र नीचीरैनोन्नवंत गावः स्व१र्दृशीके ॥ ५ ॥

---

६५

पश्वा । न । तायुं । गुहा । चतंतं । नमः । युजानं । नमः । वहंतं ।
सऽजोषाः । धीराः । पदैः । अनु । ग्मन् । उप । त्वा । सीदन् । विश्वे । यजत्राः ॥
ऋतस्य । देवाः । अनु । व्रता । गुः । भुवत् । परिष्टिः । द्यौः । न । भूम ।
वर्धंति । ईं । आपः । पन्वा । सुऽशिश्विं । ऋतस्य । योना । गर्भे । सुऽजातं ॥
पुष्टिः । न । रण्वा । क्षितिः । न । पृथ्वी । गिरिः । न । भुज्म । क्षोदः । न । शंऽभु ।
अत्यः । न । अज्मन् । सर्गऽप्रतक्तः । सिंधुः । न । क्षोदः । कः । ईं । वराते ॥
जामिः । सिंधूनां । भ्राताऽइव । स्वस्रां । इभ्यान् । न । राजा । वनानि । अत्ति ।
यत् । वातऽजूतः । वना । वि । अस्थात् । अग्निः । ह । दाति । रोम । पृथिव्याः ॥
श्वसिति । अप्ऽसु । हंसः । न । सीदन् । क्रत्वा । चेतिष्ठः । विशां । उषःऽभुत् ।
सोमः । न । वेधाः । ऋतऽप्रजातः । पशुः । न । शिश्वा । विऽभुः । दूरेऽभाः ॥ ९ ॥

---

६६

रयिः । न । चित्रा । सूरः । न । संऽदृक् । आयुः । न । प्राणः । नित्यः । न । सूनुः ।
तक्वा । न । भूर्णिः । वना । सिसक्ति । पयः । न । धेनुः । शुचिः । विभाऽवा ॥
दाधार । क्षेमं । ओकः । न । रण्वः । यवः । न । पक्वः । जेता । जनानां ।
ऋषिः । न । स्तुभ्वा । विक्षु । प्रऽशस्तः । वाजी । न । प्रीतः । वयः । दधाति ॥
दुरोकऽशोचिः । क्रतुः । न । नित्यः । जायाऽइव । योनौ । अरं । विश्वस्मै ।
चित्रः । यत् । अभ्राट् । श्वेतः । न । विक्षु । रथः । न । रुक्मी । त्वेषः । समत्ऽसु ॥
सेनाऽइव । सृष्टा । अमं । दधाति । अस्तुः । न । दिद्युत् । त्वेषऽप्रतीका ।
यमः । ह । जातः । यमः । जनिऽत्वं । जारः । कनीनां । पतिः । जनीनां ॥
तं । वः । चराथा । वयं । वसत्या । अस्तं । न । गावः । नक्षंते । इद्धं ।
सिंधुः । न । क्षोदः । प्र । नीचीः । ऐनोत् । नवंत । गावः । स्वः । दृशीके ॥ १० ॥

---

## ६७

वनेषु जायुर्मर्तेषु मित्रो वृणीते श्रुष्टिं राजेवाजुर्यं ।
क्षेमो न साधुः क्रतुर्न भद्रो भुवत्स्वाधीर्होता हव्यवाट् ॥ १ ॥
हस्ते दधानो नृम्णा विश्वान्यमे देवान्धाद्गुहा निषीदन् ।
विदंतीमत्र नरो धियंधा हृदा यत्तष्टान्मंत्राँ अशंसन् ॥ २ ॥
अजो न क्षां दाधार पृथिवीं तस्तंभ द्यां मंत्रेभिः सत्यैः ।
प्रिया पदानि पश्वो नि पाहि विश्वायुरग्ने गुहा गुहं गाः ॥ ३ ॥
य ईं चिकेत गुहा भवंतमा यः ससाद धारामृतस्य ।
वि ये चृतंत्यृता सपंत आदिद्वसूनि प्र ववाचास्मै ॥ ४ ॥
वि यो वीरुत्सु रोधन्महित्वोत प्रजा उत प्रसूष्वंतः ।
चित्तिरपां दमे विश्वायुः सद्मेव धीराः संमाय चक्रुः ॥ ५ ॥

---

## ६८

श्रीणन्नुप स्थाद्दिवं भुरण्युः स्थातुश्चरथमक्तून्व्यूर्णोत् ।
परि यदेषामेको विश्वेषां भुवद्देवो देवानां महित्वा ॥ १ ॥
आदित्ते विश्वे क्रतुं जुषंत शुष्काद्यद्देव जीवो जनिष्ठाः ।
भजंत विश्वे देवत्वं नाम ऋतं सपंतो अमृतमेवैः ॥ २ ॥
ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः ।
यस्तुभ्यं दाशाद्यो वा ते शिक्षात्तस्मै चिकित्वान्रयिं दयस्व ॥ ३ ॥
होता निषत्तो मनोरपत्ये स चिन्न्वासां पती रयीणां ।
इच्छंत रेतो मिथस्तनूषु सं जानत स्वैर्दक्षैरमूराः ॥ ४ ॥
पितुर्न पुत्राः क्रतुं जुषंत श्रोषन्ये अस्य शासं तुरासः ।
वि राय और्णोद्दुरः पुरुक्षुः पिपेश नाकं स्तृभिर्दमूनाः ॥ ५ ॥

---

६७

वनेषु। जायुः। मर्तेषु। मित्रः। वृणीते। श्रुष्टिं। राजाऽइव। अजुर्यं।
क्षेमः। न। साधुः। क्रतुः। न। भद्रः। भुवत्। सुऽआधीः। होता। हव्यऽवाट्॥
हस्ते। दधानः। नृम्णा। विश्वानि। अमे। देवान्। धात्। गुहा। निऽसीदन्।
विदंति। ईं। अत्र। नरः। धियंऽधाः। हृदा। यत्। तष्टान्। मंत्रान्। अशंसन्॥
अजः। न। क्षां। दाधार। पृथिवीं। तस्तंभ। द्यां। मंत्रेभिः। सत्यैः।
प्रिया। पदानि। पश्वः। नि। पाहि। विश्वऽआयुः। अग्ने। गुहा। गुहं। गाः॥
यः। ईं। चिकेत। गुहा। भवंतं। आ। यः। ससाद। धारां। ऋतस्य।
वि। ये। चृतंति। ऋता। सपंतः। आत्। इत्। वसूनि। प्र। ववाच। अस्मै॥
वि। यः। वीरुत्ऽसु। रोधत्। महिऽत्वा। उत। प्रऽजाः। उत। प्रऽसूषु। अंतः॰।
चित्तिः। अपां। दमे। विश्वऽआयुः। सद्मऽइव। धीराः। संऽमाय। चक्रुः॥ ११॥

---

६८

श्रीणन्। उप। स्थात्। दिवं। भुरण्युः। स्थातुः। चरथं। अक्तून्। वि। ऊर्णोत्।
परि। यत्। एषां। एकः। विश्वेषां। भुवत्। देवः। देवानां। महिऽत्वा॥
आत्। इत्। ते। विश्वे। क्रतुं। जुषंत। शुष्कात्। यत्। देव। जीवः। जनिष्ठाः।
भजंत। विश्वे। देवऽत्वं। नाम। ऋतं। सपंतः। अमृतं। एवैः॥
ऋतस्य। प्रेषाः। ऋतस्य। धीतिः। विश्वऽआयुः। विश्वे। अपांसि। चक्रुः।
यः। तुभ्यं। दाशात्। यः। वा। ते। शिक्षात्। तस्मै। चिकित्वान्। रयिं। दयस्व॥
होता। निऽसत्तः। मनोः। अपत्ये। सः। चित्। नु। आसां। पतिः। रयीणां।
इच्छंत। रेतः। मिथः। तनूषु। सं। जानत। स्वैः। दक्षैः। अमूराः॥
पितुः। न। पुत्राः। क्रतुं। जुषंत। श्रोषन्। ये। अस्य। शासं। तुरासः।
वि। रायः। और्णोत्। दुरः। पुरुऽक्षुः। पिपेश। नाकं। स्तृभिः। दमूनाः॥ १२॥

---

६९

शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः ।
परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन् ॥ १ ॥
वेधा अदृप्तो अग्निर्विजानन्नूधर्न गोनां स्वाद्मा पितूनां ।
जने न शेव आहूर्यः सन्मध्ये निषत्तो रण्वो दुरोणे ॥ २ ॥
पुत्रो न जातो रण्वो दुरोणे वाजी न प्रीतो विशो वि तारीत् ।
विशो यदह्वे नृभिः सनीळा अग्निर्देवत्वा विश्वान्यश्याः ॥ ३ ॥
नकिष्ट एता व्रता मिनंति नृभ्यो यदेभ्यः श्रुष्टिं चकर्थ ।
तत्तु ते दंसो यदहन्त्समानैर्नृभिर्यद्युक्तो विवे रपाँसि ॥ ४ ॥
उषो न जारो विभावोस्रः संज्ञातरूपश्चिकेतदस्मै ।
त्मना वहंतो दुरो व्यृण्वन्नवंत विश्वे स्व१र्दृशीके ॥ ५ ॥

---

७०

वनेम पूर्वीरर्यो मनीषा अग्निः सुशोको विश्वान्यश्याः ।
आ दैव्यानि व्रता चिकित्वाना मानुषस्य जनस्य जन्म ॥ १ ॥
गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथां ।
अद्रौ चिदस्मा अंतर्दुरोणे विशां न विश्वो अमृतः स्वाधीः ॥ २ ॥
स हि क्षपावाँ अग्नी रयीणां दाशद्यो अस्मा अरं सूक्तैः ।
एता चिकित्वो भूमा नि पाहि देवानां जन्म मर्तांश्च विद्वान् ॥ ३ ॥
वर्धान्यं पूर्वीः क्षपो विरूपाः स्थातुश्च रथमृतप्रवीतं ।
अराधि होता स्व१र्निषत्तः कृण्वन्विश्वान्यपांसि सत्या ॥ ४ ॥
गोषु प्रशस्तिं वनेषु धिषे भरंत विश्वे बलिं स्वर्णः ।
वि त्वा नरः पुरुत्रा सपर्यन्पितुर्न जिव्रेर्वि वेदो भरंत ॥ ५ ॥
साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु ॥ ६ ॥

---

६९

शुक्रः। शुशुक्वान्। उषः। न। जारः। पप्रा। सम्ऽईची॰। दिवः। न। ज्योतिः।
परि। प्रऽजातः। क्रत्वा। बभूथ। भुवः। देवानां। पिता। पुत्रः। सन्॥
वेधाः। अदृप्तः। अग्निः। विऽजानन्। ऊधः। न। गोनां। स्वाद्म। पितूनां।
जने। न। शेवः। आऽहूर्यः। सन्। मध्ये। निऽसत्तः। रण्वः। दुरोणे॥
पुत्रः। न। जातः। रण्वः। दुरोणे। वाजी। न। प्रीतः। विशः। वि। तारीत्।
विशः। यत्। अह्वे। नृऽभिः। सऽनीळाः। अग्निः। देवऽत्वा। विश्वानि। अश्याः॥
नकिः। ते। एता। व्रता। मिनंति। नृऽभ्यः। यत्। एभ्यः। श्रुष्टिं। चकर्थ।
तत्। तु। ते। दंसः। यत्। अहन्। समानैः। नृऽभिः। यत्। युक्तः। विवेः। रपांसि॥
उषः। न। जारः। विभाऽवा। उस्रः। संज्ञातऽरूपः। चिकेतत्। अस्मै।
त्मना। वहंतः। दुरः। वि। ऋण्वन्। नवंत। विश्वे। स्वः। दृशीके॥१३॥

---

७०

वनेम। पूर्वीः। अर्यः। मनीषा। अग्निः। सुऽशोकः। विश्वानि। अश्याः।
आ। दैव्यानि। व्रता। चिकित्वान्। आ। मानुषस्य। जनस्य। जन्म॥
गर्भः। यः। अपां। गर्भः। वनानां। गर्भः। च। स्थातां। गर्भः। चरथां।
अद्रौ। चित्। अस्मै। अंतः। दुरोणे। विशां। न। विश्वः। अमृतः। सुऽआधीः॥
सः। हि। क्षपाऽवान्। अग्निः। रयीणां। दाशत्। यः। अस्मै। अरं। सुऽउक्तैः।
एता। चिकित्वः। भूम। नि। पाहि। देवानां। जन्म। मर्तान्। च। विद्वान्॥
वर्धान्। यं। पूर्वीः। क्षपः। विऽरूपाः। स्थातुः। च। रथं। ऋतऽप्रवीतं।
अराधि। होता। स्वः। निऽसत्तः। कृण्वन्। विश्वानि। अपांसि। सत्या॥
गोषु। प्रऽशस्तिं। वनेषु। धिषे। भरंत। विश्वे। बलिं। स्वः। नः।
वि। त्वा। नरः। पुरुऽत्रा। सपर्यन्। पितुः। न। जिव्रेः। वि। वेदः। भरंत॥
साधुः। न। गृध्नुः। अस्ताऽइव। शूरः। याताऽइव। भीमः। त्वेषः। समत्ऽसु॥१४॥

---

७१

उप प्र जिन्वन्नुशतीरुशंतं पतिं न नित्यं जनयः सनीळाः ।
स्वसारः श्यावीमरुषीमजुषन् चित्रमुच्छंतीमुषसं न गावः ॥ १ ॥
वीळु चिद्दृळ्हा पितरो न उक्थैरद्रिं रुजन्नंगिरसो रवेण ।
चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः ॥ २ ॥
दधन्नृतं धनयन्नस्य धीतिमादिदर्यो दिधिष्वोऽ३ विभृत्राः ।
अतृष्यंतीरपसो यंत्यच्छा देवान् जन्म प्रयसा वर्धयंतीः ॥ ३ ॥
मथीद्यदीं विभृतो मातरिश्वा गृहेगृहे श्येतो जेन्यो भूत् ।
आदीं राज्ञे न सहीयसे सचा सन्ना दूत्यं१भृगवाणो विवाय ॥ ४ ॥
महे यत्पित्र ईं रसं दिवे करव त्सरत्पृशन्यश्चिकित्वान् ।
सृजदस्ता धृषता दिद्युमस्मै स्वायां देवो दुहितरि त्विषिं धात् ॥ ५ ॥
स्व आ यस्तुभ्यं दम आ विभाति नमो वा दाशादुशतो अनु द्यून् ।
वर्धो अग्ने वयो अस्य द्विबर्हा यासद्राया सरथं यं जुनासि ॥ ६ ॥
अग्निं विश्वा अभि पृक्षः सचंते समुद्रं न स्रवतः सप्त यह्वीः ।
न जामिभिर्वि चिकिते वयो नो विदा देवेषु प्रमतिं चिकित्वान् ॥ ७ ॥
आ यदिषे नृपतिं तेज आनट् शुचि रेतो निषिक्तं द्यौरभीके ।
अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनयत्सूदयच्च ॥ ८ ॥
मनो न योऽध्वनः सद्य एत्येकः सत्रा सूरो वस्व ईशे ।
राजाना मित्रावरुणा सुपाणी गोषु प्रियममृतं रक्षमाणा ॥ ९ ॥
मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा अभि विदुष्कविः सन् ।
नभो न रूपं जरिमा मिनाति पुरा तस्या अभिशस्तेरधीहि ॥ १० ॥

---

७२

नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि ।
अग्निर्भुवद्रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा ॥ १ ॥
अस्मे वत्सं परि षंतं न विंदन्निच्छंतो विश्वे अमृता अमूराः ।
श्रमयुवः पदव्यो धियंधास्तस्थुः पदे परमे चार्वग्नेः ॥ २ ॥

७१

उप । प्र । जिन्वन् । उशतीः । उशंतं । पतिं । न । नित्यं । जनयः । सऽनीळाः ।
स्वसारः । श्यावीं । अरुषीं । अजुषन् । चित्रं । उच्छंतीं । उषसं । न । गावः ॥
वीळु । चित् । दृळ्हा । पितरः । नः । उक्थैः । अद्रिं । रुजन् । अंगिरसः । रवेण ।
चक्रुः । दिवः । बृहतः । गातुं । अस्मे॰ । अहः॰ । स्वः । विविदुः । केतुं । उस्राः ॥
दधन् । ऋतं । धनयन् । अस्य । धीतिं । आत् । इत् । अर्यः । दिधिष्वः । विऽभृत्राः ।
अतृष्यंतीः । अपसः । यंति । अच्छ । देवान् । जन्म । प्रयसा । वर्धयंतीः ॥
मथीत् । यत् । ईं । विऽभृतः । मातरिश्वा । गृहेऽगृहे । श्येतः । जेन्यः । भूत् ।
आत् । ईं । राज्ञे । न । सहीयसे । सचा । सन् । आ । दूत्यं । भृगवाणः । विवाय ॥
महे । यत् । पित्रे । ईं । रसं । दिवे । कः । अव । त्सरत् । पृशन्यः । चिकित्वान् ।
सृजत् । अस्ता । धृषता । दिद्युं । अस्मै । स्वायां । देवः । दुहितरि । त्विषिं । धात् ॥ १५ ॥
स्वे । आ । यः । तुभ्यं । दमे । आ । विऽभाति । नमः । वा । दाशात् । उशतः । अनु । द्यून् ।
वर्धो॰ । अग्ने । वयः । अस्य । द्विऽबर्हाः । यासत् । राया । सऽरथं । यं । जुनासि ॥
अग्निं । विश्वाः । अभि । पृक्षः । सचंते । समुद्रं । न । स्रवतः । सप्त । यह्वीः ।
न । जामिऽभिः । वि । चिकिते । वयः । नः । विदाः । देवेषु । प्रऽमतिं । चिकित्वान् ॥
आ । यत् । इषे । नृऽपतिं । तेजः । आनट् । शुचि । रेतः । निऽसिक्तं । द्यौः । अभीके ।
अग्निः । शर्धं । अनवद्यं । युवानं । सुऽआध्यं । जनयत् । सूदयत् । च ॥
मनः । न । यः । अध्वनः । सद्यः । एति । एकः । सत्रा । सूरः । वस्वः । ईशे ।
राजाना । मित्रावरुणा । सुऽपाणी॰ । गोषु । प्रियं । अमृतं । रक्षमाणा ॥
मा । नः । अग्ने । सख्या । पित्र्याणि । प्र । मर्षिष्ठाः । अभि । विदुः । कविः । सन् ।
नभः । न । रूपं । जरिमा । मिनाति । पुरा । तस्याः । अभिऽशस्तेः । अधि । इहि ॥ १६ ॥

---

७२

नि । काव्या । वेधसः । शश्वतः । कः । हस्ते । दधानः । नर्या । पुरूणि ।
अग्निः । भुवत् । रयिऽपतिः । रयीणां । सत्रा । चक्राणः । अमृतानि । विश्वा ॥
अस्मे॰ । वत्सं । परि । संतं । न । विंदन् । इच्छंतः । विश्वे । अमृताः । अमूराः ।
श्रमऽयुवः । पदऽव्यः । धियंऽधाः । तस्थुः । पदे । परमे । चारु । अग्नेः ॥

तिस्रो यदग्ने शरदस्त्वामिच्छुचिं घृतेन शुचयः सपर्यान् ।
नामानि चिद्दधिरे यज्ञियान्यसूदयंत तन्व१ः सुजाताः ॥ ३ ॥
आ रोदसी बृहती वेविदानाः प्र रुद्रिया जभ्रिरे यज्ञियासः ।
विदन्मर्तो नेमधिता चिकित्वानग्निं पदे परमे तस्थिवांसं ॥ ४ ॥
संजानाना उप सीदन्नभिज्ञु पत्नीवंतो नमस्यं नमस्यन् ।
रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः ॥ ५ ॥
त्रिः सप्त यद्गुह्यानि त्वे इत्पदाविदन्निहिता यज्ञियासः ।
तेभी रक्षंते अमृतं सजोषाः पशूञ्च स्थातॄञ्चरथं च पाहि ॥ ६ ॥
विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक्शुरुधो जीवसे धाः ।
अंतर्विद्वाँ अध्वनो देवयानानतंद्रो दूतो अभवो हविर्वाट् ॥ ७ ॥
स्वाध्यो दिव आ सप्त यह्वी रायो दुरो व्यृतज्ञा अजानन् ।
विदद्गव्यं सरमा दृळ्हमूर्वं येना नु कं मानुषी भोजते विट् ॥ ८ ॥
आ ये विश्वा स्वपत्यानि तस्थुः कृण्वानासो अमृतत्वाय गातुं ।
मह्ना महद्भिः पृथिवी वि तस्थे माता पुत्रैरदितिर्धायसे वेः ॥ ९ ॥
अधि श्रियं नि दधुश्चारुमस्मिन्दिवो यदक्षी अमृता अकृण्वन् ।
अध क्षरंति सिंधवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन् ॥ १० ॥

---

७३

रयिर्न यः पितृवित्तो वयोधाः सुप्रणीतिश्चिकितुषो न शासुः ।
स्योनशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत् ॥ १ ॥
देवो न यः सविता सत्यमन्मा क्रत्वा निपाति वृजनानि विश्वा ।
पुरुप्रशस्तो अमतिर्न सत्य आत्मेव शेवो दिधिषाय्यो भूत् ॥ २ ॥
देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा ।
पुरःसदः शर्मसदो न वीरा अनवद्या पतिजुष्टेव नारी ॥ ३ ॥
तं त्वा नरो दम आ नित्यमिद्धमग्ने सचंत क्षितिषु ध्रुवासु ।
अधि द्युम्नं नि दधुर्भूर्यस्मिन्भवा विश्वायुर्धरुणो रयीणां ॥ ४ ॥

ति॒स्रः। यत्। अ॒ग्ने॒। श॒रदः॑। त्वां। इत्। शुचिं॑। घृ॒तेन॑। शुच॑यः। स॒प॒र्यान्।
नामा॑नि। चि॒त्। द॒धि॒रे॒। य॒ज्ञिया॑नि। असू॑दयंत। त॒न्वः॑। सुऽजा॑ताः॥
आ। रोद॑सी॰। बृ॒ह॒ती॰। वेवि॑दानाः। प्र। रु॒द्रिया॑। ज॒भ्रि॒रे॒। य॒ज्ञिया॑सः।
वि॒दत्। मर्तः॑। ने॒मऽधि॑ता। चि॒कि॒त्वान्। अ॒ग्निं। प॒दे। प॒र॒मे। त॒स्थिऽवांसं॑॥
सं॒ऽजा॒ना॒नाः। उप॑। सी॒द॒न्। अ॒भि॒ऽज्ञु। पत्नी॑ऽवंतः। न॒म॒स्यं॑। न॒म॒स्य॒न्।
रि॒रि॒क्वांसः॑। त॒न्वः॑। कृ॒ण्व॒त॒। स्वाः। सखा॑। सख्युः॑। नि॒ऽमि॒षि॑। रक्ष॑माणाः॥ १७॥
त्रिः। स॒प्त। यत्। गुह्या॑नि। त्वे॰। इत्। प॒दा। अ॒वि॒द॒न्। नि॒ऽहि॑ता। य॒ज्ञिया॑सः।
तेभिः॑। र॒क्ष॒ंते॒। अ॒मृतं॑। स॒ऽजोषाः॑। प॒शून्। च॒। स्था॒तॄन्। च॒रथं॑। च॒। पा॒हि॒॥
वि॒द्वान्। अ॒ग्ने॒। व॒युना॑नि। क्षि॒ती॒नां। वि। आ॒नु॒षक्। शु॒रुधः॑। जी॒वसे॑। धाः॒।
अं॒तः॒ऽवि॒द्वान्। अध्व॑नः। दे॒व॒ऽयाना॑न्। अतं॑द्रः। दू॒तः। अ॒भ॒वः॒। ह॒वि॒ःऽवाट्॥
सु॒ऽआ॒ध्यः॑। दि॒वः। आ। स॒प्त। य॒ह्वीः। रा॒यः। दु॒रः॑। वि। ऋ॒त॒ऽज्ञाः। अ॒जा॒न॒न्।
वि॒दत्। गव्यं॑। स॒रमा॑। दृ॒ळ्हं। ऊ॒र्वं। येन॑। नु। कं॒। मानु॑षी। भोज॑ते। विट्॥
आ। ये। विश्वा॑। सु॒ऽअ॒प॒त्यानि॑। त॒स्थुः। कृ॒ण्वा॒नासः॑। अ॒मृ॒त॒ऽत्वाय॑। गा॒तुं।
म॒ह्ना। म॒ह॒त्ऽभिः॑। पृ॒थि॒वी। वि। त॒स्थे॒। मा॒ता। पु॒त्रैः। अदि॑तिः। धाय॑से। वेः॰॥
अधि॑। श्रियं॑। नि। द॒धुः॒। चारुं॑। अ॒स्मि॒न्। दि॒वः। यत्। अ॒क्षी॰। अ॒मृता॑ः। अकृ॑ण्वन्।
अध॑। क्ष॒रं॑ति॒। सिंध॑वः। न। सृ॒ष्टाः। प्र। नी॒चीः। अ॒ग्ने॒। अरु॑षीः। अ॒जा॒न॒न्॥ १८॥

---

७३

र॒यिः। न। यः। पि॒तृ॒ऽवि॒त्तः। व॒यः॒ऽधाः। सु॒ऽप्रनी॑तिः। चि॒कि॒तु॒षः॑। न। शा॒सुः॑।
स्यो॒न॒ऽशीः। अति॑थिः। न। प्री॒णा॒नः। होता॑ऽइव। सद्म॑। वि॒ध॒तः। वि। ता॒री॒त्॥
दे॒वः। न। यः। स॒वि॒ता। स॒त्यऽमं॑न्मा। क्रत्वा॑। नि॒ऽपाति॑। वृ॒जना॑नि। विश्वा॑।
पु॒रु॒ऽप्र॒श॒स्तः। अ॒मतिः॑। न। स॒त्यः। आ॒त्माऽइ॑व। शेवः॑। दि॒धि॒षाय्यः॑। भू॒त्॥
दे॒वः। न। यः। पृ॒थि॒वीं। वि॒श्वऽधा॑याः। उ॒प॒ऽक्षेति॑। हि॒त॒ऽमि॑त्रः। न। राजा॑।
पु॒रः॒ऽसदः॑। श॒र्म॒ऽसदः॑। न। वी॒राः। अ॒न॒व॒द्या। पति॑जुष्टाऽइव। नारी॑॥
तं। त्वा॒। नरः॑। दमे॑। आ। नित्यं॑। इ॒द्धं। अ॒ग्ने॒। सचं॑त। क्षि॒तिषु॑। ध्रु॒वासु॑।
अधि॑। द्यु॒म्नं। नि। द॒धुः॒। भूरि॑। अ॒स्मि॒न्। भव॑। वि॒श्वऽआ॑युः। ध॒रुणः॑। र॒यी॒णां॥

वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः ।
सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः ॥ ५ ॥
ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयंत द्युभक्ताः ।
परावतः सुमतिं भिक्षमाणा वि सिंधवः समया सस्रुरद्रिं ॥ ६ ॥
त्वे अग्ने सुमतिं भिक्षमाणा दिवि श्रवो दधिरे यज्ञियासः ।
नक्ता च चक्रुरुषसा विरूपे कृष्णं च वर्णमरुणं च सं धुः ॥ ७ ॥
यान्राये मर्तान्त्सुषूदो अग्ने ते स्याम मघवानो वयं च ।
छायेव विश्वं भुवनं सिसक्ष्यापप्रिवान्रोदसी अंतरिक्षं ॥ ८ ॥
अर्वद्भिरग्ने अर्वतो नृभिर्नॄन्वीरैर्वीरान्वनुयामा त्वोताः ।
ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः ॥ ९ ॥
एता ते अग्न उचथानि वेधो जुष्टानि संतु मनसे हृदे च ।
शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः ॥ १० ॥ १२ ॥

---

## ७४

उपप्रयंतो अध्वरं मंत्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ १ ॥
यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु । अरक्षद्दाशुषे गयं ॥ २ ॥
उत ब्रुवंतु जंतव उदग्निर्वृत्रहाजनि । धनंजयो रणेरणे ॥ ३ ॥
यस्य दूतो असि क्षये वेषि हव्यानि वीतये । दस्मत्कृणोष्यध्वरं ॥ ४ ॥
तमित्सुहव्यमंगिरः सुदेवं सहसो यहो । जना आहुः सुबर्हिषं ॥ ५ ॥
आ च वहासि ताँ इह देवाँ उप प्रशस्तये । हव्या सुश्चंद्र वीतये ॥ ६ ॥
न योरुपब्दिरश्व्यः शृण्वे रथस्य कच्चन । यदग्ने यासि दूत्यं ॥ ७ ॥
त्वोतो वाज्यह्रयोऽभि पूर्वस्मादपरः । प्र दाश्वाँ अग्ने अस्थात् ॥ ८ ॥
उत द्युमत्सुवीर्यं बृहदग्ने विवाससि । देवेभ्यो देव दाशुषे ॥ ९ ॥

---

## ७५

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमं । हव्या जुह्वान आसनि ॥ १ ॥

वि। पृक्षः। अग्ने। मघऽवानः। अश्युः। वि। सूरयः। ददतः। विश्वं। आयुः।
सनेम। वाजं। संऽइथेषु। अर्यः। भागं। देवेषु। श्रवसे। दधानाः ॥ १९ ॥
ऋतस्य। हि। धेनवः। वावशानाः। स्मत्ऽऊध्नीः। पीपयंत। द्युऽभक्ताः।
पराऽवतः। सुऽमतिं। भिक्षमाणाः। वि। सिंधवः। समया। सस्रुः। अद्रिं ॥
त्वे॰। अग्ने। सुऽमतिं। भिक्षमाणाः। दिवि। श्रवः। दधिरे। यज्ञियासः।
नक्ता। च। चक्रुः। उषसा। विऽरूपे॰। कृष्णं। च। वर्णं। अरुणं। च। सं। धुः॰ ॥
यान्। राये। मर्तान्। सुसूदः। अग्ने। ते। स्याम। मघऽवानः। वयं। च।
छायाऽइव। विश्वं। भुवनं। सिसक्षि। आपप्रिऽवान्। रोदसी॰। अंतरिक्षं ॥
अर्वत्ऽभिः। अग्ने। अर्वतः। नृऽभिः। नृन्। वीरैः। वीरान्। वनुयाम। त्वाऽऊताः।
ईशानासः। पितृऽवित्तस्य। रायः। वि। सूरयः। शतऽहिमाः। नः। अश्युः ॥
एता। ते। अग्ने। उचथानि। वेधः। जुष्टानि। संतु। मनसे। हृदे। च।
शकेम। रायः। सुऽधुरः। यमं। ते। अधि। श्रवः। देवऽभक्तं। दधानाः ॥ २० ॥

---

७४

उपऽप्रयंतः। अध्वरं। मंत्रं। वोचेम। अग्नये। आरे। अस्मे॰। च। शृण्वते ॥
यः। स्नीहितीषु। पूर्व्यः। संऽजग्मानासु। कृष्टिषु। अरक्षत्। दाशुषे। गयं ॥
उत। ब्रुवंतु। जंतवः। उत्। अग्निः। वृत्रऽहा। अजनि। धनंऽजयः। रणेऽरणे ॥
यस्य। दूतः। असि। क्षये। वेषि। हव्यानि। वीतये। दस्मत्। कृणोषि। अध्वरं ॥
तं। इत्। सुऽहव्यं। अंगिरः। सुऽदेवं। सहसः। यहो॰। जनाः। आहुः। सुऽबर्हिषं ॥ २१ ॥
आ। च। वहासि। तान्। इह। देवान्। उप। प्रऽशस्तये। हव्या। सुऽचंद्र। वीतये ॥
न। योः। उपब्दिः। अश्व्यः। शृण्वे। रथस्य। कत्। चन। यत्। अग्ने। यासि। दूत्यं ॥
त्वाऽऊतः। वाजी। अह्रयः। अभि। पूर्वस्मात्। अपरः। प्र। दाश्वान्। अग्ने। अस्थात् ॥
उत। द्युऽमत्। सुऽवीर्यं। बृहत्। अग्ने। विवाससि। देवेभ्यः। देव। दाशुषे ॥ २२ ॥

---

७५

जुषस्व। सप्रथःऽतमं। वचः। देवप्सरःऽतमं। हव्या। जुह्वानः। आसनि ॥

अधा ते अंगिरस्तमाग्ने वेधस्तम प्रियं। वोचेम ब्रह्म सानसि ॥ २ ॥
कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितः ॥ ३ ॥
त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ॥ ४ ॥
यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमं ॥ ५ ॥

---

७६

का त उपेतिर्मनसो वराय भुवदग्ने शंतमा का मनीषा ।
को वा यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम ॥ १ ॥
एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः ।
अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ॥ २ ॥
प्र सु विश्वान्रक्षसो धक्ष्यग्ने भवा यज्ञानामभिशस्तिपावा ।
अथा वह सोमपतिं हरिभ्यामातिथ्यमस्मै चकृमा सुदाव्ने ॥ ३ ॥
प्रजावता वचसा वह्निरासा च हुवे नि च सत्सीह देवैः ।
वेषि होत्रमुत पोत्रं यजत्र बोधि प्रयंतर्जनितर्वसूनां ॥ ४ ॥
यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन् ।
एवा होतः सत्यतर त्वमद्याग्ने मंद्रया जुह्वा यजस्व ॥ ५ ॥

---

७७

कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः ।
यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत्कृणोति देवान् ॥ १ ॥
यो अध्वरेषु शंतम ऋतावा होता तमू नमोभिरा कृणुध्वं ।
अग्निर्यद्वेर्मर्ताय देवान्त्स चा बोधाति मनसा यजाति ॥ २ ॥
स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।
तं मेधेषु प्रथमं देवयंतीर्विश उप ब्रुवते दस्ममारीः ॥ ३ ॥
स नो नृणां नृतमो रिशादा अग्निर्गिरोऽवसा वेतु धीतिं ।
तना च ये मघवानः शविष्ठा वाजप्रसूता इषयंत मन्म ॥ ४ ॥

अर्थ । ते । अंगिरःऽतम । अग्ने । वेधःऽतम । प्रियं । वोचेम । ब्रह्म । सानसि ॥
कः । ते । जामिः । जनानां । अग्ने । कः । दाशुऽअध्वरः । कः । ह । कस्मिन् । असि । श्रितः ॥
त्वं । जामिः । जनानां । अग्ने । मित्रः । असि । प्रियः । सखा । सखिऽभ्यः । ईड्यः ॥
यज । नः । मित्रावरुणा । यज । देवान् । ऋतं । बृहत् । अग्ने । यक्षि । स्वं । दमं ॥ २३ ॥

---

७६

का । ते । उपऽइतिः । मनसः । वराय । भुवत् । अग्ने । शंऽतमा । का । मनीषा ।
कः । वा । यज्ञैः । परि । दक्षं । ते । आप । केन । वा । ते । मनसा । दाशेम ॥
आ । इहि । अग्ने । इह । होता । नि । सीद । अदब्धः । सु । पुरःऽएता । भव । नः ।
अवतां । त्वा । रोदसी॰ । विश्वंऽइन्वे॰ । यज । महे । सौमनसाय । देवान् ॥
प्र । सु । विश्वान् । रक्षसः । धक्षि । अग्ने । भव । यज्ञानां । अभिशस्तिऽपावा ।
अथ । आ । वह । सोमऽपतिं । हरिऽभ्यां । आतिथ्यं । अस्मै । चकृम । सुऽदाव्ने ॥
प्रजाऽवता । वचसा । वह्निः । आसा । आ । च । हुवे । नि । च । सत्सि । इह । देवैः ।
वेषि । होत्रं । उत । पोत्रं । यजत्र । बोधि । प्रऽयंतः । जनितः । वसूनां ॥
यथा । विप्रस्य । मनुषः । हविःऽभिः । देवान् । अयजः । कविऽभिः । कविः । सन् ।
एव । होतः॰ । सत्यऽतर । त्वं । अद्य । अग्ने । मंद्रया । जुह्वा । यजस्व ॥ २४ ॥

---

७७

कथा । दाशेम । अग्नये । का । अस्मै । देवऽजुष्टा । उच्यते । भामिने । गीः ।
यः । मर्त्येषु । अमृतः । ऋतऽवा । होता । यजिष्ठः । इत् । कृणोति । देवान् ॥
यः । अध्वरेषु । शंऽतमः । ऋतऽवा । होता । तं । ऊं॰ । नमःऽभिः । आ । कृणुध्वं ।
अग्निः । यत् । वेः । मर्ताय । देवान् । सः । च । बोधाति । मनसा । यजाति ॥
सः । हि । क्रतुः । सः । मर्यः । सः । साधुः । मित्रः । न । भूत् । अद्भुतस्य । रथीः ।
तं । मेधेषु । प्रथमं । देवऽयंतीः । विशः । उप । ब्रुवते । दस्मं । आरीः ॥
सः । नः । नृणां । नृऽतमः । रिशादाः । अग्निः । गिरः । अवसा । वेतु । धीतिं ।
तना । च । ये । मघऽवानः । शविष्ठाः । वाजऽप्रसूताः । इषयंत । मन्म ॥

एवाग्निर्गोतमेभिर्ऋतावा विप्रेभिरस्तोष्ट जातवेदाः ।
स एषु द्युम्नं पीपयत्स वाजं स पुष्टिं याति जोषमा चिकित्वान् ॥ ५ ॥

---

७८

अभि त्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभि प्र णोनुमः ॥ १ ॥
तमु त्वा गोतमो गिरा रायस्कामो दुवस्यति । द्युम्नैरभि प्र णोनुमः ॥ २ ॥
तमु त्वा वाजसातममंगिरस्वद्धवामहे । द्युम्नैरभि प्र णोनुमः ॥ ३ ॥
तमु त्वा वृत्रहंतमं यो दस्यूँरवधूनुषे । द्युम्नैरभि प्र णोनुमः ॥ ४ ॥
अवोचाम रहूगणा अग्नये मधुमद्वचः । द्युम्नैरभि प्र णोनुमः ॥ ५ ॥

---

७९

हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् ।
शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ॥ १ ॥
आ ते सुपर्णा अमिनंतँ एवैः कृष्णो नोनाव वृषभो यदीदं ।
शिवाभिर्न स्मयमानाभिरागात्पतंति मिहः स्तनयंत्यभ्रा ॥ २ ॥
यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः ।
अर्यमा मित्रो वरुणः परिज्मा त्वचं पृंचंत्युपरस्य योनौ ॥ ३ ॥
अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे धेहि जातवेदो महि श्रवः ॥ ४ ॥
स इधानो वसुष्कविरग्निरीळेन्यो गिरा ।
रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ ५ ॥
क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः ।
स तिग्मजंभ रक्षसो दह प्रति ॥ ६ ॥
अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वंद्य ॥ ७ ॥
आ नो अग्ने रयिं भर सत्रासाहं वरेण्यं । विश्वासु पृत्सु दुष्टरं ॥ ८ ॥
आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसं । मार्डीकं धेहि जीवसे ॥ ९ ॥

एव। अग्निः। गोतमेभिः। ऋतऽवा। विप्रेभिः। अस्तोष्ट। जातऽवेदाः।
सः। एषु। द्युम्नं। पीपयत्। सः। वाजं। सः। पुष्टिं। याति। जोषं। आ। चिकित्वान्॥२५॥

---

## ७८

अभि। त्वा। गोतमाः। गिरा। जातऽवेदः। विऽचर्षणे। द्युम्नैः। अभि। प्र। नोनुमः॥
तं। ऊं॰। त्वा। गोतमः। गिरा। रायःऽकामः। दुवस्यति। द्युम्नैः। अभि। प्र। नोनुमः॥
तं। ऊं॰। त्वा। वाजऽसातमं। अंगिरस्वत्। हवामहे। द्युम्नैः। अभि। प्र। नोनुमः॥
तं। ऊं॰। त्वा। वृत्रहन्ऽतमं। यः। दस्यून्। अवऽधूनुषे। द्युम्नैः। अभि। प्र। नोनुमः॥
अवोचाम। रहूगणाः। अग्नये। मधुऽमत्। वचः। द्युम्नैः। अभि। प्र। नोनुमः॥ २६॥

---

## ७९

हिरण्यऽकेशः। रजसः। विऽसारे। अहिः। धुनिः। वातःऽइव। ध्रजीमान्।
शुचिऽभ्राजाः। उषसः। नवेदाः। यशस्वतीः। अपस्युवः। न। सत्याः॥
आ। ते। सुऽपर्णाः। अमिनंत। एवैः। कृष्णः। नोनाव। वृषभः। यदि। इदं।
शिवाभिः। न। स्मयमानाभिः। आ। अगात्। पतंति। मिहः। स्तनयंति। अभ्रा॥
यत्। ईं। ऋतस्य। पयसा। पियानः। नयन्। ऋतस्य। पथिऽभिः। रजिष्ठैः।
अर्यमा। मित्रः। वरुणः। परिऽज्मा। त्वचं। पृंचंति। उपरस्य। योनौ॥
अग्ने। वाजस्य। गोऽमतः। ईशानः। सहसः। यहो॰।
अस्मे॰। धेहि। जातऽवेदः। महि। श्रवः॥
सः। इधानः। वसुः। कविः। अग्निः। ईळेन्यः। गिरा।
रेवत्। अस्मभ्यं। पुरुऽअनीक। दीदिहि॥
क्षपः। राजन्। उत। त्मना। अग्ने। वस्तोः। उत। उषसः।
सः। तिग्मऽजंभ। रक्षसः। दह। प्रति॥ २७॥
अव। नः। अग्ने। ऊतिऽभिः। गायत्रस्य। प्रऽभर्मणि। विश्वासु। धीषु। वंद्य॥
आ। नः। अग्ने। रयिं। भर। सत्राऽसहं। वरेण्यं। विश्वासु। पृत्ऽसु। दुस्तरं॥
आ। नः। अग्ने। सुऽचेतुना। रयिं। विश्वायुऽपोषसं। मार्डीकं। धेहि। जीवसे॥

प्र पूतास्तिग्मशोचिषे वाचो गोतमाग्नये । भरस्व सुम्नयुर्गिरः ॥ १० ॥
यो नो अग्नेऽभिदासत्यंति दूरे पदीष्ट सः । अस्माकमिद्वृधे भव ॥ ११ ॥
सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति । होता गृणीत उक्थ्यः ॥ १२ ॥

---

८०

इत्था हि सोम इन्मदे ब्रह्मा चकार वर्धनं ।
शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यं ॥ १ ॥
स त्वामदद्वृषा मदः सोमः श्येनाभृतः सुतः ।
येना वृत्रं निरद्भ्यो जघंथ वज्रिन्नोजसार्चन्ननु स्वराज्यं ॥ २ ॥
प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते ।
इंद्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यं ॥ ३ ॥
निरिंद्र भूम्या अधि वृत्रं जघंथ निर्दिवः ।
सृजा मरुत्वतीरव जीवधन्या इमा अपोऽर्चन्ननु स्वराज्यं ॥ ४ ॥
इंद्रो वृत्रस्य दोधतः सानुं वज्रेण हीळितः ।
अभिक्रम्याव जिघ्नतेऽपः समीय चोदयन्नर्चन्ननु स्वराज्यं ॥ ५ ॥
अधि सानौ नि जिघ्नते वज्रेण शतपर्वणा ।
मंदान इंद्रो अंधसः सखिभ्यो गातुमिच्छत्यर्चन्ननु स्वराज्यं ॥ ६ ॥
इंद्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यं ।
यद्ध त्यं मायिनं मृगं तमु त्वं माययावधीरर्चन्ननु स्वराज्यं ॥ ७ ॥
वि ते वज्रासो अस्थिरन्नवतिं नाव्या३ अनु ।
महत्त इंद्र वीर्यं बाह्वोस्ते बलं हितमर्चन्ननु स्वराज्यं ॥ ८ ॥
सहस्रं साकमर्चत परि ष्टोभत विंशतिः ।
शतैनमन्वनोनवुरिंद्राय ब्रह्मोद्यतमर्चन्ननु स्वराज्यं ॥ ९ ॥
इंद्रो वृत्रस्य तविषीं निरहन्सहसा सहः ।
महत्तदस्य पौंस्यं वृत्रं जघन्वाँ असृजदर्चन्ननु स्वराज्यं ॥ १० ॥
इमे चित्तव मन्यवे वेपेते भियसा मही ।
यदिंद्र वज्रिन्नोजसा वृत्रं मरुत्वाँ अवधीरर्चन्ननु स्वराज्यं ॥ ११ ॥

प्र। पूताः। तिग्मऽशोचिषे। वाचः। गोतम। अग्नये। भरस्व। सुम्नऽयुः। गिरः॥
यः। नः। अग्ने। अभिऽदासति। अंति। दूरे। पदीष्ट। सः। अस्माकं। इत्। वृधे। भव॥
सहस्रऽअक्षः। विऽचर्षणिः। अग्निः। रक्षांसि। सेधति। होता। गृणीते। उक्थ्यः॥२८॥

---

८०

इत्था। हि। सोमे। इत्। मदे। ब्रह्मा। चकार। वर्धनं।
शविष्ठ। वज्रिन्। ओजसा। पृथिव्याः। निः। शशाः। अहिं। अर्चन्। अनु। स्वऽराज्यं॥
सः। त्वा। अमदत्। वृषा। मदः। सोमः। श्येनऽआभृतः। सुतः।
येन। वृत्रं। निः। अत्ऽभ्यः। जघंथ। वज्रिन्। ओजसा। अर्चन्। अनु। स्वऽराज्यं॥
प्र। इहि। अभि। इहि। धृष्णुहि। न। ते। वज्रः। नि। यंसते।
इंद्र। नृम्णं। हि। ते। शवः। हनः। वृत्रं। जयाः। अपः। अर्चन्। अनु। स्वऽराज्यं॥
निः। इंद्र। भूम्याः। अधि। वृत्रं। जघंथ। निः। दिवः।
सृज। मरुत्वतीः। अव। जीवऽधन्याः। इमाः। अपः। अर्चन्। अनु। स्वऽराज्यं॥
इंद्रः। वृत्रस्य। दोधतः। सानुं। वज्रेण। हीळितः।
अभिऽक्रम्य। अव। जिघ्नते। अपः। सर्माय। चोदयन्। अर्चन्। अनु। स्वऽराज्यं॥२९॥
अधि। सानौ। नि। जिघ्नते। वज्रेण। शतऽपर्वणा।
मंदानः। इंद्रः। अंधसः। सखिऽभ्यः। गातुं। इच्छति। अर्चन्। अनु। स्वऽराज्यं॥
इंद्र। तुभ्यं। इत्। अद्रिऽवः। अनुत्तं। वज्रिन्। वीर्यं।
यत्। ह। त्यं। मायिनं। मृगं। तं। ऊं॰। त्वं। मायया। अवधीः। अर्चन्। अनु। स्वऽराज्यं॥
वि। ते। वज्रासः। अस्थिरन्। नवतिं। नाव्याः। अनु।
महत्। ते। इंद्र। वीर्यं। बाह्वोः। ते। बलं। हितं। अर्चन्। अनु। स्वऽराज्यं॥
सहस्रं। साकं। अर्चत। परि। स्तोभत। विंशतिः।
शता। एनं। अनु। अनोनवुः। इंद्राय। ब्रह्म। उत्ऽयतं। अर्चन्। अनु। स्वऽराज्यं॥
इंद्रः। वृत्रस्य। तविषीं। निः। अहन्। सहसा। सहः।
महत्। तत्। अस्य। पौंस्यं। वृत्रं। जघन्वान्। असृजत्। अर्चन्। अनु। स्वऽराज्यं॥३०॥
इमे॰। चित्। तव। मन्यवे। वेपेते॰। भियसा। मही॰।
यत्। इंद्र। वज्रिन्। ओजसा। वृत्रं। मरुत्वान्। अवधीः। अर्चन्। अनु। स्वऽराज्यं॥

न वेपसा न तन्यतेंद्रं वृत्रो वि बीभयत् ।
अभ्येनं वज्र आयसः सहस्रभृष्टिरायतार्चन्ननु स्वराज्यं ॥ १२ ॥
यद्वृत्रं तव चाशनिं वज्रेण समयोधयः ।
अहिमिंद्र जिघांसतो दिवि ते बद्बधे शवोऽर्चन्ननु स्वराज्यं ॥ १३ ॥
अभिष्टने ते अद्रिवो यत्स्था जगच्च रेजते ।
त्वष्टा चित्तव मन्यव इंद्र वेविज्यते भियार्चन्ननु स्वराज्यं ॥ १४ ॥
नहि नु यादधीमसींद्रं को वीर्या परः ।
तस्मिन्नृम्णमुत क्रतुं देवा ओजांसि सं दधुरर्चन्ननु स्वराज्यं ॥ १५ ॥
यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।
तस्मिन्ब्रह्माणि पूर्वथेंद्र उक्था समग्मतार्चन्ननु स्वराज्यं ॥ १६ ॥

---

८१

इंद्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतेमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ १ ॥
असि हि वीर सेन्योऽसि भूरि परादृदिः ।
असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥ २ ॥
यदुदीरत आजयो धृष्णवे धीयते धना ।
युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इंद्र वसौ दधः ॥ ३ ॥
क्रत्वा महाँ अनुष्वधं भीम आ वावृधे शवः ।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसं ॥ ४ ॥
आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि ।
न त्वावाँ इंद्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥ ५ ॥
यो अर्यो मर्तभोजनं परादृदाति दाशुषे ।
इंद्रो अस्मभ्यं शिक्षतु वि भजा भूरि ते वसु भक्षीय तव राधसः ॥ ६ ॥
मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः ।
सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ भर ॥ ७ ॥

न। वेपसा। न। तन्यता। इंद्रं। वृत्रः। वि। बीभयत्।
अभि। एनं। वज्रः। आयसः। सहस्रऽभृष्टिः। आयत। अर्चन्। अनु। स्वऽराज्यं॥
यत्। वृत्रं। तव। च। अशनिं। वज्रेण। संऽअयोधयः।
अहिं। इंद्र। जिघांसतः। दिवि। ते। बद्बधे। शवः। अर्चन्। अनु। स्वऽराज्यं॥
अभिऽस्तने। ते। अद्रिऽवः। यत्। स्थाः। जगत्। च। रेजते।
त्वष्टा। चित्। तव। मन्यवे। इंद्र। वेविज्यते। भिया। अर्चन्। अनु। स्वऽराज्यं॥
नहि। नु। यात्। अधिऽइमसि। इंद्रं। कः। वीर्या। परः।
तस्मिन्। नृम्णं। उत। क्रतुं। देवाः। ओजांसि। सं। दधुः। अर्चन्। अनु। स्वऽराज्यं॥
यां। अथर्वा। मनुः। पिता। दध्यङ्। धियं। अत्नत।
तस्मिन्। ब्रह्माणि। पूर्वऽथा। इंद्रे। उक्था। सं। अग्मत। अर्चन्। अनु। स्वऽराज्यं॥३१॥५॥

---

## ८१

इंद्रः। मदाय। ववृधे। शवसे। वृत्रऽहा। नृऽभिः।
तं। इत्। महत्ऽसु। आजिषु। उत। ईं। अर्भे। हवामहे। स। वाजेषु। प्र। नः। अविषत्॥
असि। हि। वीर। सेन्यः। असि। भूरि। पराऽददिः।
असि। दभ्रस्य। चित्। वृधः। यजमानाय। शिक्षसि। सुन्वते। भूरि। ते। वसु॥
यत्। उत्ऽईरते। आजयः। धृष्णवे। धीयते। धना।
युक्ष्व। मदऽच्युता। हरी॰। कं। हनः। कं। वसौ। दधः। अस्मान्। इंद्र। वसौ। दधः॥
क्रत्वा। महान्। अनुऽस्वधं। भीमः। आ। ववृधे। शवः।
श्रिये। ऋष्वः। उपाकयोः। नि। शिप्री। हरिऽवान्। दधे। हस्तयोः। वज्रं। आयसं॥
आ। पप्रौ। पार्थिवं। रजः। बद्बधे। रोचना। दिवि।
न। त्वाऽवान्। इंद्र। कः। चन। न। जातः। न। जनिष्यते। अति। विश्वं। ववक्षिथ॥१॥
यः। अर्यः। मर्तऽभोजनं। पराऽददाति। दाशुषे।
इंद्रः। अस्मभ्यं। शिक्षतु। वि। भज। भूरि। ते। वसु। भक्षीय। तव। राधसः॥
मदेऽमदे। हि। नः। ददिः। यूथा। गवां। ऋजुऽक्रतुः।
सं। गृभाय। पुरु। शता। उभयाहस्त्या। वसु। शिशीहि। रायः। आ। भर॥

मादयस्व सुते सचा शवसे शूर राधसे ।
विद्मा हि त्वा पुरूवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव ॥ ८ ॥
एते त इंद्र जंतवो विश्वं पुष्यंति वार्यं ।
अंतर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ॥ ९ ॥

---

८२

उपो षु शृणुही गिरो मघवन्मातथा इव ।
यदा नः सूनृतावतः कर आदर्थयास इद्योजा न्विंद्र ते हरी ॥ १ ॥
अक्षन्नमीमदंत ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विंद्र ते हरी ॥ २ ॥
सुसंदृशं त्वा वयं मघवन्वंदिषीमहि ।
प्र नूनं पूर्णवंधुरः स्तुतो याहि वशाँ अनु योजा न्विंद्र ते हरी ॥ ३ ॥
स घा तं वृषणं रथमधि तिष्ठाति गोविदं ।
यः पात्रं हारियोजनं पूर्णमिंद्र चिकेतति योजा न्विंद्र ते हरी ॥ ४ ॥
युक्तस्ते अस्तु दक्षिण उत सव्यः शतक्रतो ।
तेन जायामुप प्रियां मंदानो याह्यंधसो योजा न्विंद्र ते हरी ॥ ५ ॥
युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः ।
उत्त्वा सुतासो रभसा अमंदिषुः पूषण्वान्वज्रिन्त्समु पत्न्यामदः ॥ ६ ॥

---

८३

अश्वावति प्रथमो गोषु गच्छति सुप्रावीरिंद्र मर्त्यस्तवोतिभिः ।
तमित्पृणक्षि वसुना भवीयसा सिंधुमापो यथाभितो विचेतसः ॥ १ ॥
आपो न देवीरुप यंति होत्रियमवः पश्यंति विततं यथा रजः ।
प्राचैर्देवासः प्र णयंति देवयुं ब्रह्मप्रियं जोषयंते वरा इव ॥ २ ॥
अधि द्वयोरदधा उक्थ्यं१ वचो यतस्रुचा मिथुना या सपर्यतः ।
असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ॥ ३ ॥

मादयस्व। सुते। सचा। शवसे। शूर। राधसे।
विद्म। हि। त्वा। पुरुऽवसुं। उप। कामान्। ससृज्महे। अथ। नः। अविता। भव॥
एते। ते। इंद्र। जंतवः। विश्वं। पुष्यंति। वार्यं।
अंतः। हि। ख्यः। जनानां। अर्यः। वेदः। अदाशुषां। तेषां। नः। वेदः। आ। भर॥२॥

---

८२

उपो॰। सु। शृणुहि। गिरः। मघऽवन्। मा। अतथाःऽइव।
यदा। नः। सूनृताऽवतः। करः। आत्। अर्थयासे। इत्। योज। नु। इंद्र। ते। हरी॰॥
अक्षन्। अमीमदंत। हि। अव। प्रियाः। अधूषत।
अस्तोषत। स्वऽभानवः। विप्राः। नविष्ठया। मती। योज। नु। इंद्र। ते। हरी॰॥
सुऽसंदृशं। त्वा। वयं। मघऽवन्। वंदिषीमहि।
प्र। नूनं। पूर्णऽवंधुरः। स्तुतः। याहि। वशान्। अनु। योज। नु। इंद्र। ते। हरी॰॥
सः। घ। तं। वृषणं। रथं। अधि। तिष्ठाति। गोऽविदं।
यः। पात्रं। हारिऽयोजनं। पूर्णं। इंद्र। चिकेतति। योज। नु। इंद्र। ते। हरी॰॥
युक्तः। ते। अस्तु। दक्षिणः। उत। सव्यः। शतऽक्रतो॰।
तेन। जायां। उप। प्रियां। मंदानः। याहि। अंधसः। योज। नु। इंद्र। ते। हरी॰॥
युनज्मि। ते। ब्रह्मणा। केशिना। हरी॰। उप। प्र। याहि। दधिषे। गभस्त्योः।
उत्। त्वा। सुतासः। रभसाः। अमंदिषुः। पूषण्ऽवान्। वज्रिन्। सं। ऊं॰। पत्न्या। अमदः॥३॥

---

८३

अश्वऽवति। प्रथमः। गोषु। गच्छति। सुप्रऽअवीः। इंद्र। मर्त्यः। तव। ऊतिऽभिः।
तं। इत्। पृणक्षि। वसुना। भवीयसा। सिंधुं। आपः। यथा। अभितः। विऽचेतसः॥
आपः। न। देवीः। उप। यंति। होत्रियं। अवः। पश्यंति। विऽततं। यथा। रजः।
प्राचैः। देवासः। प्र। नयंति। देवऽयुं। ब्रह्मऽप्रियं। जोषयंते। वराःऽइव॥
अधि। द्वयोः। अदधाः। उक्थ्यं। वचः। यतऽस्रुचा। मिथुना। या। सपर्यतः।
असंऽयतः। व्रते। ते। क्षेति। पुष्यति। भद्रा। शक्तिः। यजमानाय। सुन्वते॥

आदंगिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया ।
सर्वं पणेः समविंदंत भोजनमश्वावंतं गोमंतमा पशुं नरः ॥ ४ ॥
यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि ।
आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजामहे ॥ ५ ॥
बर्हिर्वा यत्स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषते दिवि ।
ग्रावा यत्र वदति कारुरुक्थ्य१स्तस्येदिंद्रो अभिपित्वेषु रण्यति ॥ ६ ॥

---

८४

असावि सोम इंद्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विंद्रियं रजः सूर्यो न रश्मिभिः ॥ १ ॥
इंद्रमिद्धरी वहतोऽप्रतिधृष्टशवसं ।
ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणां ॥ २ ॥
आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥ ३ ॥
इममिंद्र सुतं पिब ज्येष्ठममर्त्यं मदं ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ४ ॥
इंद्राय नूनमर्चतोक्थानि च ब्रवीतन ।
सुता अमत्सुरिंदवो ज्येष्ठं नमस्यता सहः ॥ ५ ॥
नकिष्ट्वद्रथीतरो हरी यदिंद्र यच्छसे ।
नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे ॥ ६ ॥
य एक इद्विदयते वसु मर्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इंद्रो अंग ॥ ७ ॥
कदा मर्तमराधसं पदा क्षुंपमिव स्फुरत् ।
कदा नः शुश्रवद्गिर इंद्रो अंग ॥ ८ ॥
यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति ।
उग्रं तत्पत्यते शव इंद्रो अंग ॥ ९ ॥

आत्। अंगिराः। प्रथमं। दधिरे। वयः। इद्धऽअग्नयः। शम्या। ये। सुऽकृत्यया।
सर्वं। पणेः। सं। अविंदंत। भोजनं। अश्वऽवंतं। गोऽमंतं। आ। पशुं। नरः॥
यज्ञैः। अथर्वा। प्रथमः। पथः। तते। ततः। सूर्यः। व्रतऽपाः। वेनः। आ। अजनि।
आ। गाः। आजत्। उशना। काव्यः। सचा। यमस्य। जातं। अमृतं। यजामहे॥
बर्हिः। वा। यत्। सुऽअपत्याय। वृज्यते। अर्कः। वा। श्लोकं। आऽघोषते। दिवि।
ग्रावा। यत्र। वदति। कारुः। उक्थ्यः। तस्य। इत्। इंद्रः। अभिऽपित्वेषु। रण्यति॥४॥

---

८४

असावि। सोमः। इंद्र। ते। शविष्ठ। धृष्णो॰। आ। गहि।
आ। त्वा। पृणक्तु। इंद्रियं। रजः। सूर्यः। न। रश्मिऽभिः॥
इंद्रं। इत्। हरी॰। वहतः। अप्रतिधृष्टऽशवसं।
ऋषीणां। च। स्तुतीः। उप। यज्ञं। च। मानुषाणां॥
आ। तिष्ठ। वृत्रऽहन्। रथं। युक्ता। ते। ब्रह्मणा। हरी॰।
अर्वाचीनं। सु। ते। मनः। ग्रावा। कृणोतु। वग्नुना॥
इमं। इंद्र। सुतं। पिब। ज्येष्ठं। अमर्त्यं। मदं।
शुक्रस्य। त्वा। अभि। अक्षरन्। धाराः। ऋतस्य। सदने॥
इंद्राय। नूनं। अर्चत। उक्थानि। च। ब्रवीतन।
सुताः। अमत्सुः। इंदवः। ज्येष्ठं। नमस्यत। सहः॥ ५॥
नकिः। त्वत्। रथिऽतरः। हरी॰। यत्। इंद्र। यच्छसे।
नकिः। त्वा। अनु। मज्मना। नकिः। सुऽअश्वः। आनशे॥
यः। एकः। इत्। विऽदयते। वसु। मर्ताय। दाशुषे।
ईशानः। अप्रतिऽस्कुतः। इंद्रः। अंग॥
कदा। मर्तं। अराधसं। पदा। क्षुंपंऽइव। स्फुरत्।
कदा। नः। शुश्रवत्। गिरः। इंद्रः। अंग॥
यः। चित्। हि। त्वा। बहुऽभ्यः। आ। सुतऽवान्। आऽविवासति।
उग्रं। तत्। पत्यते। शवः। इंद्रः। अंग॥

स्वादोरित्था विषूवतो मध्वः पिबंति गौर्यः ।
या इंद्रेण सयावरी वृष्णा मदंति शोभसे वस्वीरनु स्वराज्यं ॥ १० ॥
ता अस्य पृशनायुवः सोमं श्रीणंति पृश्नयः ।
प्रिया इंद्रस्य धेनवो वज्रं हिन्वंति सायकं वस्वीरनु स्वराज्यं ॥ ११ ॥
ता अस्य नमसा सहः सपर्यंति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यं ॥ १२ ॥
इंद्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥ १३ ॥
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितं । तद्विदच्छर्यणावति ॥ १४ ॥
अत्राह गोरमन्वत नाम त्वष्टुरपीच्यं । इत्था चंद्रमसो गृहे ॥ १५ ॥
को अद्य युंक्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ १६ ॥
क ईषते तुज्यते को बिभाय को मंसते संतमिंद्रं को अंति ।
कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे३को जनाय ॥ १७ ॥
को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः ।
कस्मै देवा आ वहानाशु होम को मंसते वीतिहोत्रः सुदेवः ॥ १८ ॥
त्वमंग प्र शंसिषो देवः शविष्ठ मर्त्यं ।
न त्वदन्यो मघवन्नस्ति मर्डितेंद्र ब्रवीमि ते वचः ॥ १९ ॥
मा ते राधांसि मा त ऊतयो वसोऽस्मान्कदा चना दभन् ।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥ २० ॥ १३ ॥

---

## ८५

प्र ये शुंभंते जनयो न सप्तयो यामन्रुद्रस्य सूनवः सुदंससः ।
रोदसी हि मरुतश्चक्रिरे वृधे मदंति वीरा विदथेषु घृष्वयः ॥ १ ॥
त उक्षितासो महिमानमाशत दिवि रुद्रासो अधि चक्रिरे सदः ।
अर्चंतो अर्कं जनयंत इंद्रियमधि श्रियो दधिरे पृश्निमातरः ॥ २ ॥
गोमातरो यच्छुभयंते अंजिभिस्तनूषु शुभ्रा दधिरे विरुक्मतः ।
बाधंते विश्वमभिमातिनमप वर्त्मान्येषामनु रीयते घृतं ॥ ३ ॥

स्वादोः । इत्था । विषुऽवतः । मध्वः । पिबंति । गौर्यः ।
याः । इंद्रेण । सऽयावरीः । वृष्णा । मदंति । शोभसे । वस्वीः । अनु । स्वऽराज्यं ॥ ६ ॥
ताः । अस्य । पृशनऽयुवः । सोमं । श्रीणंति । पृश्नयः ।
प्रियाः । इंद्रस्य । धेनवः । वज्रं । हिन्वंति । सायकं । वस्वीः । अनु । स्वऽराज्यं ॥
ताः । अस्य । नमसा । सहः । सपर्यंति । प्रऽचेतसः ।
व्रतानि । अस्य । सश्चिरे । पुरूणि । पूर्वऽचित्तये । वस्वीः । अनु । स्वऽराज्यं ॥
इंद्रः । दधीचः । अस्थऽभिः । वृत्राणि । अप्रतिऽस्कुतः । जघान । नवतीः । नव ॥
इच्छन् । अश्वस्य । यत् । शिरः । पर्वतेषु । अपऽश्रितं । तत् । विदत् । शर्यणाऽवति ॥
अत्र । अह । गोः । अमन्वत । नाम । त्वष्टुः । अपीच्यं । इत्था । चंद्रमसः । गृहे ॥ ७ ॥
कः । अद्य । युंक्ते । धुरि । गाः । ऋतस्य । शिमीऽवतः । भामिनः । दुःऽहृणायून् ।
आसनऽइषून् । हृत्सुऽअसः । मयःऽभून् । यः । एषां । भृत्यां । ऋणधत् । सः । जीवात् ॥
कः । ईषते । तुज्यते । कः । बिभाय । कः । मंसते । संतं । इंद्रं । कः । अंति ।
कः । तोकाय । कः । इभाय । उत । राये । अधि । ब्रवत् । तन्वे । कः । जनाय ॥
कः । अग्निं । ईट्टे । हविषा । घृतेन । स्रुचा । यजातै । ऋतुऽभिः । ध्रुवेभिः ।
कस्मै । देवाः । आ । वहान् । आशु । होम । कः । मंसते । वीतिऽहोत्रः । सुऽदेवः ॥
त्वं । अंग । प्र । शंसिषः । देवः । शविष्ठ । मर्त्यं ।
न । त्वत् । अन्यः । मघऽवन् । अस्ति । मर्डिता । इंद्र । ब्रवीमि । ते । वचः ॥
मा । ते । राधांसि । मा । ते । ऊतयः । वसो° । अस्मान् । कदा । चन । दभन् ।
विश्वा । च । नः । उपऽमिमीहि । मानुष । वसूनि । चर्षणिऽभ्यः । आ ॥ ८ ॥

---

८५

प्र । ये । शुंभंते । जनयः । न । सप्तयः । यामन् । रुद्रस्य । सूनवः । सुऽदंससः ।
रोदसी° । हि । मरुतः । चक्रिरे । वृधे । मदंति । वीराः । विदथेषु । घृष्वयः ॥
ते । उक्षितासः । महिमानं । आशत । दिवि । रुद्रासः । अधि । चक्रिरे । सदः ।
अर्चंतः । अर्कं । जनयंतः । इंद्रियं । अधि । श्रियः । दधिरे । पृश्निऽमातरः ॥
गोऽमातरः । यत् । शुभयंते । अंजिऽभिः । तनूषु । शुभ्राः । दधिरे । विरुक्मतः ।
बाधंते । विश्वं । अभिऽमातिनं । अप । वर्त्मानि । एषां । अनु । रीयते । घृतं ॥

वि ये भ्राजंते सुमखास ऋष्टिभिः प्रच्यावयंतो अच्युता चिदोजसा ।
मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वं ॥ ४ ॥
प्र यद्रथेषु पृषतीरयुग्ध्वं वाजे अद्रिं मरुतो रंहयंतः ।
उतारुषस्य वि ष्यंति धाराश्चर्मेवोदभिर्व्युंदंति भूम ॥ ५ ॥
आ वो वहंतु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः ।
सीदता बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अंधसः ॥ ६ ॥
तेऽवर्धंत स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः ।
विष्णुर्यद्धावद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ॥ ७ ॥
शूरा इवेद्युयुधयो न जग्मयः श्रवस्यवो न पृतनासु येतिरे ।
भयंते विश्वा भुवना मरुद्भ्यो राजान इव त्वेषसंदृशो नरः ॥ ८ ॥
त्वष्टा यद्वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत् ।
धत्त इंद्रो नर्यपांसि कर्तवेऽहन्वृत्रं निरपामौब्जदर्णवं ॥ ९ ॥
ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद्बिभिदुर्वि पर्वतं ।
धमंतो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ॥ १० ॥
जिह्मं नुनुद्रेऽवतं तया दिशासिंचन्नुत्सं गोतमाय तृष्णजे ।
आ गच्छंतीमवसा चित्रभानवः कामं विप्रस्य तर्पयंत धामभिः ॥ ११ ॥
या वः शर्म शशमानाय संति त्रिधातूनि दाशुषे यच्छताधि ।
अस्मभ्यं तानि मरुतो वि यंत रयिं नो धत्त वृषणः सुवीरं ॥ १२ ॥

---

८६

मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥ १ ॥
यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनां । मरुतः शृणुता हवं ॥ २ ॥
उत वा यस्य वाजिनोऽनु विप्रमतक्षत । स गंता गोमति व्रजे ॥ ३ ॥
अस्य वीरस्य बर्हिषि सुतः सोमो दिविष्टिषु । उक्थं मदश्च शस्यते ॥ ४ ॥
अस्य श्रोषंत्वा भुवो विश्वा यश्चर्षणीरभि । सूरं चित्सस्रुषीरिषः ॥ ५ ॥
पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयं । अवोभिश्चर्षणीनां ॥ ६ ॥
सुभगः स प्रयज्यवो मरुतो अस्तु मर्त्यः । यस्य प्रयांसि पर्षथ ॥ ७ ॥

वि। ये। भ्राजंते। सुऽमखासः। ऋष्टिऽभिः। प्रऽच्यवयंतः। अच्युता। चित्। ओजसा।
मनःऽजुवः। यत्। मरुतः। रथेषु। आ। वृषऽव्रातासः। पृषतीः। अयुग्ध्वं॥
प्र। यत्। रथेषु। पृषतीः। अयुग्ध्वं। वाजे। अद्रिं। मरुतः। रंहयंतः।
उत। अरुषस्य। वि। स्यंति। धाराः। चर्मऽइव। उदऽभिः। वि। उंदंति। भूम॥
आ। वः। वहंतु। सप्तयः। रघुऽस्यदः। रघुऽपत्वानः। प्र। जिगात। बाहुऽभिः।
सीदत। आ। बर्हिः। उरु। वः। सदः। कृतं। मादयध्वं। मरुतः। मध्वः। अंधसः॥ ९॥
ते। अवर्धंत। स्वऽतवसः। महिऽत्वना। आ। नाकं। तस्थुः। उरु। चक्रिरे। सदः।
विष्णुः। यत्। ह। आवत्। वृषणं। मदऽच्युतं। वयः। न। सीदन्। अधि। बर्हिषि। प्रिये॥
शूराःऽइव। इत्। युयुधयः। न। जग्मयः। श्रवस्यवः। न। पृतनासु। येतिरे।
भयंते। विश्वा। भुवना। मरुत्ऽभ्यः। राजानःऽइव। त्वेषऽसंदृशः। नरः॥
त्वष्टा। यत्। वज्रं। सुऽकृतं। हिरण्ययं। सहस्रऽभृष्टिं। सुऽअपाः। अवर्तयत्।
धत्ते। इंद्रः। नरि। अपांसि। कर्तवे। अहन्। वृत्रं। निः। अपां। औब्जत्। अर्णवं॥
ऊर्ध्वं। नुनुद्रे। अवतं। ते। ओजसा। ददृहाणं। चित्। बिभिदुः। वि। पर्वतं।
धमंतः। वाणं। मरुतः। सुऽदानवः। मदे। सोमस्य। रण्यानि। चक्रिरे॥
जिह्मं। नुनुद्रे। अवतं। तया। दिशा। असिंचन्। उत्सं। गोतमाय। तृष्णऽजे।
आ। गच्छंति। ईं। अवसा। चित्रऽभानवः। कामं। विप्रस्य। तर्पयंत। धामऽभिः॥
या। वः। शर्म। शशमानाय। संति। त्रिऽधातूनि। दाशुषे। यच्छत। अधि।
अस्मभ्यं। तानि। मरुतः। वि। यंत। रयिं। नः। धत्त। वृषणः। सुऽवीरं॥ १०॥

---

८६

मरुतः। यस्य। हि। क्षये। पाथ। दिवः। विऽमहसः। सः। सुऽगोपातमः। जनः॥
यज्ञैः। वा। यज्ञऽवाहसः। विप्रस्य। वा। मतीनां। मरुतः। शृणुत। हवं॥
उत। वा। यस्य। वाजिनः। अनु। विप्रं। अतक्षत। सः। गंता। गोऽमति। व्रजे॥
अस्य। वीरस्य। बर्हिषि। सुतः। सोमः। दिविष्टिषु। उक्थं। मदः। च। शस्यते॥
अस्य। श्रोषंतु। आ। भुवः। विश्वाः। यः। चर्षणीः। अभि। सूरं। चित्। सस्रुषीः। इषः॥ ११॥
पूर्वीभिः। हि। ददाशिम। शरत्ऽभिः। मरुतः। वयं। अवःऽभिः। चर्षणीनां॥
सुऽभगः। सः। प्रऽयज्यवः। मरुतः। अस्तु। मर्त्यः। यस्य। प्रयांसि। पर्षथ॥

शशमानस्य वा नरः स्वेदस्य सत्यशवसः । विदा कामस्य वेनतः ॥ ८ ॥
यूयं तत्सत्यशवस आविष्कर्त महित्वना । विध्यता विद्युता रक्षः ॥ ९ ॥
गूहता गुह्यं तमो वि यात विश्वमत्रिणं । ज्योतिष्कर्ता यदुश्मसि ॥ १० ॥

---

८७

प्रत्वक्षसः प्रतवसो विरप्शिनोऽनानता अविथुरा ऋजीषिणः ।
जुष्टतमासो नृतमासो अंजिभिर्व्यानज्रे के चिदुस्रा इव स्तृभिः ॥ १ ॥
उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः केन चित्पथा ।
श्चोतंति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्णमर्चते ॥ २ ॥
प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युंजते शुभे ।
ते क्रीळयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयंत धूतयः ॥ ३ ॥
स हि स्वसृत्पृषदश्वो युवा गणो३या ईशानस्तविषीभिरावृतः ।
असि सत्य ऋणयावाऽनेद्योऽस्या धियः प्राविताथा वृषा गणः ॥ ४ ॥
पितुः प्रत्नस्य जन्मना वदामसि सोमस्य जिह्वा प्र जिगाति चक्षसा ।
यदीमिंद्रं शम्यृक्वाण आशतादिन्नामानि यज्ञियानि दधिरे ॥ ५ ॥
श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ।
ते वाशीमंत इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥ ६ ॥

---

८८

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ।
आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ॥ १ ॥
तेऽरुणेभिर्वरमा पिशंगैः शुभे कं यांति रथतूर्भिरश्वैः ।
रुक्मो न चित्रः स्वधितीवान्पव्या रथस्य जंघनंत भूम ॥ २ ॥
श्रिये कं वो अधि तनूषु वाशीर्मेधा वना न कृणवंत ऊर्ध्वा ।
युष्मभ्यं कं मरुतः सुजातास्तुविद्युम्नासो धनयंते अद्रिं ॥ ३ ॥

शशमानस्य । वा । नरः । स्वेदस्य । सत्यऽशवसः । विद । कामस्य । वेनतः ॥
यूयं । तत् । सत्यऽशवसः । आविः । कर्त । महिऽत्वना । विध्यत । विऽद्युता । रक्षः ॥
गूहत । गुह्यं । तमः । वि । यात । विश्वं । अत्रिणं । ज्योतिः । कर्त । यत् । उश्मसि ॥१२॥

---

८७

प्रऽत्वक्षसः । प्रऽतवसः । विऽरप्शिनः । अनानताः । अविथुराः । ऋजीषिणः ।
जुष्टऽतमासः । नृऽतमासः । अंजिऽभिः । वि । आनज्रे । के । चित् । उस्राःऽइव । स्तृऽभिः ॥
उपऽह्वरेषु । यत् । अचिध्वं । ययिं । वयःऽइव । मरुतः । केन । चित् । पथा ।
श्चोतंति । कोशाः । उप । वः । रथेषु । आ । घृतं । उक्षत । मधुऽवर्णं । अर्चते ॥
प्र । एषां । अज्मेषु । विथुराऽइव । रेजते । भूमिः । यामेषु । यत् । ह । युंजते । शुभे ।
ते । क्रीळयः । धुनयः । भ्राजत्ऽऋष्टयः । स्वयं । महिऽत्वं । पनयंत । धूतयः ॥
सः । हि । स्वऽसृत् । पृषत्ऽअश्वः । युवा । गणः । अया । ईशानः । तविषीभिः । आऽवृतः ।
असि । सत्यः । ऋणऽयावा । अनेद्यः । अस्याः । धियः । प्रऽअविता । अथ । वृषा । गणः ॥
पितुः । प्रत्नस्य । जन्मना । वदामसि । सोमस्य । जिह्वा । प्र । जिगाति । चक्षसा ।
यत् । ईं । इंद्रं । शमि । ऋक्वाणः । आशत । आत् । इत् । नामानि । यज्ञियानि । दधिरे ॥
श्रियसे । कं । भानुऽभिः । सं । मिमिक्षिरे । ते । रश्मिऽभिः । ते । ऋक्वऽभिः । सुऽखादयः ।
ते । वाशीऽमंतः । इष्मिणः । अभीरवः । विद्रे । प्रियस्य । मारुतस्य । धाम्नः ॥ १३ ॥

---

८८

आ । विद्युन्मत्ऽभिः । मरुतः । सुऽअर्कैः । रथेभिः । यात । ऋष्टिमत्ऽभिः । अश्वऽपर्णैः ।
आ । वर्षिष्ठया । नः । इषा । वयः । न । पप्तत । सुऽमायाः ॥
ते । अरुणेभिः । वरं । आ । पिशंगैः । शुभे । कं । यांति । रथतूःऽभिः । अश्वैः ।
रुक्मः । न । चित्रः । स्वधितिऽवान् । पव्या । रथस्य । जंघनंत । भूम ॥
श्रिये । कं । वः । अधि । तनूषु । वाशीः । मेधा । वना । न । कृणवंते । ऊर्ध्वा ।
युष्मभ्यं । कं । मरुतः । सुऽजाताः । तुविऽद्युम्नासः । धनयंते । अद्रिं ॥

अहा॑नि॒ गृध्राः॒ पर्या॑ व॒ आगु॑रि॒मां धियं॑ वार्का॒र्यां॑ च दे॒वीं ।
ब्रह्म॑ कृ॒ण्वंतो॒ गोत॑मासो अ॒र्कैरू॒र्ध्वं नु॑नुद्र उत्स॒धिं पिब॑ध्यै ॥ ४ ॥
ए॒तत्त्यन्न योज॑नमचेति स॒स्वर्ह॒ यन्म॑रुतो॒ गोत॑मो वः ।
पश्य॒न्हिर॑ण्यचक्रा॒नयो॑दंष्ट्रा॒न्वि॒धाव॑तो व॒राहू॑न् ॥ ५ ॥
ए॒षा स्या वो॑ मरुतोऽनुभ॒र्त्री प्रति॑ ष्टोभति वा॒घतो॒ न वाणीं॑ ।
अस्तो॑भय॒द्वृथा॑सा॒मनु॑ स्व॒धां गभ॑स्त्योः ॥ ६ ॥

---

८९

आ नो॑ भ॒द्राः क्रत॑वो यंतु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिदः॑ ।
दे॒वा नो॒ यथा॒ सद॒मिद्वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ॥ १ ॥
दे॒वानां॑ भ॒द्रा सु॑म॒तिर्ऋ॑जूय॒तां दे॒वानां॑ रा॒तिर॒भि नो॒ नि व॑र्ततां ।
दे॒वानां॑ स॒ख्यमुप॑ सेदिमा व॒यं दे॒वा न॒ आयुः॒ प्र ति॑रंतु जी॒वसे॑ ॥ २ ॥
तान्पूर्व॑या नि॒विदा॑ हूमहे व॒यं भगं॑ मि॒त्रमदि॑तिं॒ दक्ष॑म॒स्रिधं॑ ।
अ॒र्य॒मणं॒ वरु॑णं॒ सोम॑म॒श्विना॒ सर॑स्वती नः सु॒भगा॒ मय॑स्करत् ॥ ३ ॥
तन्नो॒ वातो॑ मयो॒भु वा॑तु भेष॒जं तन्मा॒ता पृ॑थि॒वी तत्पि॒ता द्यौः ।
तद्ग्रावा॑णः सोम॒सुतो॑ मयो॒भुव॒स्तद॑श्विना शृणुतं धिष्ण्या यु॒वं ॥ ४ ॥
तमीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑ धियंजि॒न्वमव॑से हूमहे व॒यं ।
पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द्वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑ ॥ ५ ॥
स्व॒स्ति न॒ इंद्रो॑ वृ॒द्धश्र॑वाः स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः ।
स्व॒स्ति न॒स्तार्क्ष्यो॒ अरि॑ष्टनेमिः स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥ ६ ॥
पृष॑दश्वा म॒रुतः॒ पृश्नि॑मातरः शुभं॒यावा॑नो वि॒दथे॑षु॒ जग्म॑यः ।
अ॒ग्नि॒जि॒ह्वा मन॑वः॒ सूर॑चक्षसो॒ विश्वे॑ नो दे॒वा अव॒सा ग॑मन्नि॒ह ॥ ७ ॥
भ॒द्रं कर्णे॑भिः शृणुयाम देवा भ॒द्रं प॑श्येमा॒क्षभि॒र्यज॑त्राः ।
स्थि॒रैरंगै॑स्तुष्टु॒वांस॑स्त॒नूभि॒र्व्य॑शेम दे॒वहि॑तं॒ यदायुः॑ ॥ ८ ॥
श॒तमिन्नु श॒रदो॒ अंति॑ देवा॒ यत्रा॑ नश्च॒क्रा ज॒रसं॑ त॒नूनां॑ ।
पु॒त्रासो॒ यत्र॑ पि॒तरो॒ भवं॑ति॒ मा नो॑ म॒ध्या री॑रिषता॒युर्गंतोः॑ ॥ ९ ॥

अहानि। गृध्राः। परि। आ। वः। आ। अगुः। इमां। धियं। वार्कार्यां। च। देवीं।
ब्रह्म। कृण्वंतः। गोतमासः। अर्कैः। ऊर्ध्वं। नुनुद्रे। उत्सऽधिं। पिबध्यै॥
एतत्। त्यत्। न। योजनं। अचेति। सस्वः। ह। यत्। मरुतः। गोतमः। वः।
पश्यन्। हिरण्यऽचक्रान्। अयःऽदंष्ट्रान्। विऽधावतः। वराहून्॥
एषा। स्या। वः। मरुतः। अनुऽभर्त्री। प्रति। स्तोभति। वाघतः। न। वाणी।
अस्तोभयत्। वृथा। आसां। अनु। स्वधां। गभस्त्योः॥ १४॥

---

८९

आ। नः। भद्राः। क्रतवः। यंतु। विश्वतः। अदब्धासः। अपरिऽइतासः। उत्ऽभिदः।
देवाः। नः। यथा। सदं। इत्। वृधे। असन्। अप्रऽआयुवः। रक्षितारः। दिवेऽदिवे॥
देवानां। भद्रा। सुऽमतिः। ऋजुऽयतां। देवानां। रातिः। अभि। नः। नि। वर्ततां।
देवानां। सख्यं। उप। सेदिम। वयं। देवाः। नः। आयुः। प्र। तिरंतु। जीवसे॥
तान्। पूर्वया। निऽविदा। हूमहे। वयं। भगं। मित्रं। अदितिं। दक्षं। अस्रिधं।
अर्यमणं। वरुणं। सोमं। अश्विना। सरस्वती। नः। सुऽभगा। मयः। करत्॥
तत्। नः। वातः। मयःऽभु। वातु। भेषजं। तत्। माता। पृथिवी। तत्। पिता। द्यौः।
तत्। ग्रावाणः। सोमऽसुतः। मयःऽभुवः। तत्। अश्विना। शृणुतं। धिष्ण्या। युवं॥
तं। ईशानं। जगतः। तस्थुषः। पतिं। धियंऽजिन्वं। अवसे। हूमहे। वयं।
पूषा। नः। यथा। वेदसां। असत्। वृधे। रक्षिता। पायुः। अदब्धः। स्वस्तये॥ १५॥
स्वस्ति। नः। इंद्रः। वृद्धऽश्रवाः। स्वस्ति। नः। पूषा। विश्वऽवेदाः।
स्वस्ति। नः। तार्क्ष्यः। अरिष्टऽनेमिः। स्वस्ति। नः। बृहस्पतिः। दधातु॥
पृषत्ऽअश्वाः। मरुतः। पृश्निऽमातरः। शुभंऽयावानः। विदथेषु। जग्मयः।
अग्निऽजिह्वाः। मनवः। सूरऽचक्षसः। विश्वे। नः। देवाः। अवसा। आ। गमन्। इह॥
भद्रं। कर्णेभिः। शृणुयाम। देवाः। भद्रं। पश्येम। अक्षऽभिः। यजत्राः।
स्थिरैः। अंगैः। तुस्तुऽवांसः। तनूभिः। वि। अशेम। देवऽहितं। यत्। आयुः॥
शतं। इत्। नु। शरदः। अंति। देवाः। यत्र। नः। चक्र। जरसं। तनूनां।
पुत्रासः। यत्र। पितरः। भवंति। मा। नः। मध्या। रिरिषत। आयुः। गंतोः॥

अदितिर्द्यौरदितिरंतरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पंच जना अदितिर्जातमदितिर्जनित्वं ॥ १० ॥

---

९०

ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्। अर्यमा देवैः सजोषाः ॥ १ ॥
ते हि वस्वो वसवानास्ते अप्रमूरा महोभिः। व्रता रक्षंते विश्वाहा ॥ २ ॥
ते अस्मभ्यं शर्म यंसन्नमृता मर्त्येभ्यः। बाधमाना अप द्विषः ॥ ३ ॥
वि नः पथः सुवितायं चियंत्विंद्रो मरुतः। पूषा भगो वंद्यासः ॥ ४ ॥
उत नो धियो गोअग्राः पूषन्विष्णवेवयावः। कर्ता नः स्वस्तिमतः ॥ ५ ॥
मधु वाता ऋतायते मधु क्षरंति सिंधवः। माध्वीर्नः संत्वोषधीः ॥ ६ ॥
मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता ॥ ७ ॥
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवंतु नः ॥ ८ ॥
शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा।
शं न इंद्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ ९ ॥

---

९१

त्वं सोम प्र चिकितो मनीषा त्वं रजिष्ठमनु नेषि पंथां।
तव प्रणीती पितरो न इंदो देवेषु रत्नमभजंत धीराः ॥ १ ॥
त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः।
त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥ २ ॥
राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम।
शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥ ३ ॥
या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु।
तेभिर्नो विश्वैः सुमना अहेळन्राजन्त्सोम प्रति हव्या गृभाय ॥ ४ ॥
त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः ॥ ५ ॥
त्वं च सोम नो वशो जीवातुं न मरामहे। प्रियस्तोत्रो वनस्पतिः ॥ ६ ॥

अदितिः। द्यौः। अदितिः। अंतरिक्षं। अदितिः। माता। सः। पिता। सः। पुत्रः।
विश्वे। देवाः। अदितिः। पंच। जनाः। अदितिः। जातं। अदितिः। जनिऽत्वं ॥ १६ ॥

---

९०

ऋजुऽनीती। नः। वरुणः। मित्रः। नयतु। विद्वान्। अर्यमा। देवैः। सऽजोषाः ॥
ते। हि। वस्वः। वसवानाः। ते। अप्रऽमूराः। महःऽभिः। व्रता। रक्षंते। विश्वाहा ॥
ते। अस्मभ्यं। शर्म। यंसन्। अमृताः। मर्त्येभ्यः। बाधमानाः। अप। द्विषः ॥
वि। नः। पथः। सुविताय। चियंतु। इंद्रः। मरुतः। पूषा। भगः। वंद्यासः ॥
उत। नः। धियः। गोऽअग्राः। पूषन्। विष्णो॰। एवऽयावः। कर्त। नः। स्वस्तिऽमतः ॥ १७ ॥
मधु। वाताः। ऋतऽयते। मधु। क्षरंति। सिंधवः। माध्वीः। नः। संतु। ओषधीः ॥
मधु। नक्तं। उत। उषसः। मधुऽमत्। पार्थिवं। रजः। मधु। द्यौः। अस्तु। नः। पिता ॥
मधुऽमान्। नः। वनस्पतिः। मधुऽमान्। अस्तु। सूर्यः। माध्वीः। गावः। भवंतु। नः ॥
शं। नः। मित्रः। शं। वरुणः। शं। नः। भवतु। अर्यमा।
शं। नः। इंद्रः। बृहस्पतिः। शं। नः। विष्णुः। उरुऽक्रमः ॥ १८ ॥

---

९१

त्वं। सोम। प्र। चिकितः। मनीषा। त्वं। रजिष्ठं। अनु। नेषि। पंथां।
तव। प्रऽनीती। पितरः। नः। इंदो॰। देवेषु। रत्नं। अभजंत। धीराः ॥
त्वं। सोम। क्रतुऽभिः। सुऽक्रतुः। भूः। त्वं। दक्षैः। सुऽदक्षः। विश्वऽवेदाः।
त्वं। वृषा। वृषऽत्वेभिः। महिऽत्वा। द्युम्नेभिः। द्युम्नी। अभवः। नृऽचक्षाः ॥
राज्ञः। नु। ते। वरुणस्य। व्रतानि। बृहत्। गभीरं। तव। सोम। धाम।
शुचिः। त्वं। असि। प्रियः। न। मित्रः। दक्षाय्यः। अर्यमाऽइव। असि। सोम ॥
या। ते। धामानि। दिवि। या। पृथिव्यां। या। पर्वतेषु। ओषधीषु। अप्ऽसु।
तेभिः। नः। विश्वैः। सुऽमनाः। अहेळन्। राजन्। सोम। प्रति। हव्या। गृभाय ॥
त्वं। सोम। असि। सत्ऽपतिः। त्वं। राजा। उत। वृत्रऽहा। त्वं। भद्रः। असि। क्रतुः ॥ १९ ॥
त्वं। च। सोम। नः। वशः। जीवातुं। न। मरामहे। प्रियऽस्तोत्रः। वनस्पतिः ॥

त्वं सोम महे भगं त्वं यून ऋतायते । दक्षं दधासि जीवसे ॥ ७ ॥
त्वं नः सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत्त्वावतः सखा ॥ ८ ॥
सोम यास्ते मयोभुव ऊतयः संति दाशुषे । ताभिर्नोऽविता भव ॥ ९ ॥
इमं यज्ञमिदं वचो जुजुषाण उपागहि । सोम त्वं नो वृधे भव ॥ १० ॥
सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृळीको न आ विश ॥ ११ ॥
गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः । सुमित्रः सोम नो भव ॥ १२ ॥
सोम रारंधि नो हृदि गावो न यवसेष्वा । मर्य इव स्व ओक्ये ॥ १३ ॥
यः सोम सख्ये तव रारणद्देव मर्त्यः । तं दक्षः सचते कविः ॥ १४ ॥
उरुष्या णो अभिशस्तेः सोम नि पाह्यंहसः । सखा सुशेव एधि नः ॥ १५ ॥
आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यं । भवा वाजस्य संगथे ॥ १६ ॥
आ प्यायस्व मदिंतम सोम विश्वेभिरंशुभिः । भवा नः सुश्रवस्तमः सखा वृधे ॥ १७ ॥
सं ते पयांसि समु यंतु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ १८ ॥
या ते धामानि हविषा यजंति ता ते विश्वा परिभूरस्तु यज्ञं ।
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ॥ १९ ॥
सोमो धेनुं सोमो अर्वंतमाशुं सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २० ॥
अषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपां ।
भरेषुजां सुक्षितिं सुश्रवसं जयंतं त्वामनु मदेम सोम ॥ २१ ॥
त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमा ततंथोर्वं१तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ २२ ॥
देवेन नो मनसा देव सोम रायो भागं सहसावन्नभि युध्य ।
मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्र चिकित्सा गविष्टौ ॥ २३ ॥

---

## ९२

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमंजते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यंति मातरः ॥ १ ॥

त्वं। सोम। महे। भगं। त्वं। यूने। ऋतऽयते। दक्षं। दधासि। जीवसे ॥
त्वं। नः। सोम। विश्वतः। रक्ष। राजन्। अघऽयतः। न। रिष्येत्। त्वाऽवतः। सखा ॥
सोम। याः। ते। मयःऽभुवः। ऊतयः। संति। दाशुषे। ताभिः। नः। अविता। भव ॥
इमं। यज्ञं। इदं। वचः। जुजुषाणः। उपऽआगहि। सोम। त्वं। नः। वृधे। भव ॥ २० ॥
सोम। गीःऽभिः। त्वा। वयं। वर्धयामः। वचःऽविदः। सुऽमृळीकः। नः। आ। विश ॥
गयऽस्फानः। अमीवऽहा। वसुऽवित्। पुष्टिऽवर्धनः। सुऽमित्रः। सोम। नः। भव ॥
सोम। रारंधि। नः। हृदि। गावः। न। यवसेषु। आ। मर्यःऽइव। स्वे। ओक्ये ॥
यः। सोम। सख्ये। तव। रारणत्। देव। मर्त्यः। तं। दक्षः। सचते। कविः ॥
उरुष्य। नः। अभिऽशस्तेः। सोम। नि। पाहि। अंहसः। सखा। सुऽशेवः। एधि। नः ॥ २१ ॥
आ। प्यायस्व। सं। एतु। ते। विश्वतः। सोम। वृष्ण्यं। भव। वाजस्य। संऽगथे ॥
आ। प्यायस्व। मदिन्ऽतम। सोम। विश्वेभिः। अंशुऽभिः। भव। नः। सुश्रवःऽतमः। सखा। वृधे ॥
सं। ते। पयांसि। सं। ऊं॰। यंतु। वाजाः। सं। वृष्ण्यानि। अभिमातिऽसहः।
आऽप्यायमानः। अमृताय। सोम। दिवि। श्रवांसि। उत्ऽतमानि। धिष्व ॥
या। ते। धामानि। हविषा। यजंति। ता। ते। विश्वा। परिऽभूः। अस्तु। यज्ञं।
गयऽस्फानः। प्रऽतरणः। सुऽवीरः। अवीरऽहा। प्र। चर। सोम। दुर्यान् ॥
सोमः। धेनुं। सोमः। अर्वंतं। आशुं। सोमः। वीरं। कर्मण्यं। ददाति।
सदन्यं। विदथ्यं। सभेयं। पितृऽश्रवणं। यः। ददाशत्। अस्मै ॥ २२ ॥
अषाळ्हं। युत्ऽसु। पृतनासु। पप्रिं। स्वःऽसां। अप्सां। वृजनस्य। गोपां।
भरेषुऽजां। सुऽक्षितिं। सुऽश्रवसं। जयंतं। त्वां। अनु। मदेम। सोम ॥
त्वं। इमाः। ओषधीः। सोम। विश्वाः। त्वं। अपः। अजनयः। त्वं। गाः।
त्वं। आ। ततंथ। उरु। अंतरिक्षं। त्वं। ज्योतिषा। वि। तमः। ववर्थ ॥
देवेन। नः। मनसा। देव। सोम। रायः। भागं। सहसाऽवन्। अभि। युध्य।
मा। त्वा। आ। तनत्। ईशिषे। वीर्यस्य। उभयेभ्यः। प्र। चिकित्स। गोऽइष्टौ ॥ २३ ॥

---

९२

एताः। ऊं॰। त्याः। उषसः। केतुं। अक्रत। पूर्वे। अर्धे। रजसः। भानुं। अंजते।
निःऽकृण्वानाः। आयुधानिऽइव। धृष्णवः। प्रति। गावः। अरुषीः। यंति। मातरः ॥

उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।
अक्रन्नुषासो वयुनानि पूर्वथा रुशंतं भानुमरुषीरशिश्रयुः ॥ २ ॥
अर्चंति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः ।
इषं वहंतीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥ ३ ॥
अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहं ।
ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्यु१षा आवर्तमः ॥ ४ ॥
प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वं ।
स्वरुं न पेशो विदथेष्वंजन् चित्रं दिवो दुहिता भानुमश्रेत् ॥ ५ ॥
अतारिष्म तमसस्पारमस्योषा उच्छंती वयुना कृणोति ।
श्रिये छंदो न स्मयते विभाती सुप्रतीका सौमनसायाजीगः ॥ ६ ॥
भास्वती नेत्री सूनृतानां दिव स्तवे दुहिता गोतमेभिः ।
प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ उप मासि वाजान् ॥ ७ ॥
उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यं ।
सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहंतं ॥ ८ ॥
विश्वानि देवी भुवनाभिचक्ष्या प्रतीची चक्षुरुर्विया वि भाति ।
विश्वं जीवं चरसे बोधयंती विश्वस्य वाचमविदन्मनायोः ॥ ९ ॥
पुनः पुनर्जायमाना पुराणी समानं वर्णमभि शुंभमाना ।
श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयंत्यायुः ॥ १० ॥
व्यूर्ण्वती दिवो अंताँ अबोध्यप स्वसारं सनुतर्युयोति ।
प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा वि भाति ॥ ११ ॥
पशून्न चित्रा सुभगा प्रथाना सिंधुर्न क्षोद उर्विया व्यश्वैत् ।
अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना ॥ १२ ॥
उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
येन तोकं च तनयं च धामहे ॥ १३ ॥
उषो अद्येह गोमत्यश्वावति विभावरि ।
रेवदस्मे व्युच्छ सूनृतावति ॥ १४ ॥
युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः ।
अथा नो विश्वा सौभगान्या वह ॥ १५ ॥

उत्। अपप्तन्। अरुणाः। भानवः। वृथा। सुऽआयुजः। अरुषीः। गाः। अयुक्षत।
अक्रन्। उषसः। वयुनानि। पूर्वऽथा। रुशंतं। भानुं। अरुषीः। अशिश्रयुः॥
अर्चंति। नारीः। अपसः। न। विष्टिऽभिः। समानेन। योजनेन। आ। पराऽवतः।
इषं। वहंतीः। सुऽकृते। सुऽदानवे। विश्वा। इत्। अह। यजमानाय। सुन्वते॥
अधि। पेशांसि। वपते। नृतूःऽइव। अप। ऊर्णुते। वक्षः। उस्राऽइव। बर्जहं।
ज्योतिः। विश्वस्मै। भुवनाय। कृण्वती। गावः। न। व्रजं। वि। उषाः। आवः॰। तमः॥
प्रति। अर्चिः। रुशत्। अस्याः। अदर्शि। वि। तिष्ठते। बाधते। कृष्णं। अभ्वं।
स्वरुं। न। पेशः। विदथेषु। अंजन्। चित्रं। दिवः। दुहिता। भानुं। अश्रेत्॥ २४॥
अतारिष्म। तमसः। पारं। अस्य। उषाः। उच्छंती। वयुना। कृणोति।
श्रिये। छंदः। न। स्मयते। विऽभाती। सुऽप्रतीका। सौमनसाय। अजीगः॰॥
भास्वती। नेत्री। सूनृतानां। दिवः। स्तवे। दुहिता। गोतमेभिः।
प्रजाऽवतः। नृऽवतः। अश्वऽबुध्यान्। उषः। गोऽअग्रान्। उप। मासि। वाजान्॥
उषः। तं। अश्यां। यशसं। सुऽवीरं। दासऽप्रवर्गं। रयिं। अश्वऽबुध्यं।
सुऽदंससा। श्रवसा। या। विऽभासि। वाजऽप्रसूता। सुऽभगे। बृहंतं॥
विश्वानि। देवी। भुवना। अभिऽचक्ष्य। प्रतीची। चक्षुः। उर्विया। वि। भाति।
विश्वं। जीवं। चरसे। बोधयंती। विश्वस्य। वाचं। अविदत्। मनायोः॥
पुनःऽपुनः। जायमाना। पुराणी। समानं। वर्णं। अभि। शुंभमाना।
श्वघ्नीऽइव। कृत्नुः। विजः। आऽमिनाना। मर्तस्य। देवी। जरयंती। आयुः॥ २५॥
विऽऊर्ण्वती। दिवः। अंतान्। अबोधि। अप। स्वसारं। सनुतः। युयोति।
प्रऽमिनती। मनुष्या। युगानि। योषा। जारस्य। चक्षसा। वि। भाति॥
पशून्। न। चित्रा। सुऽभगा। प्रथाना। सिंधुः। न। क्षोदः। उर्विया। वि। अश्वैत्।
अमिनती। दैव्यानि। व्रतानि। सूर्यस्य। चेति। रश्मिऽभिः। दृशाना॥
उषः। तत्। चित्रं। आ। भर। अस्मभ्यं। वाजिनीऽवति।
येन। तोकं। च। तनयं। च। धामहे॥
उषः। अद्य। इह। गोऽमति। अश्वऽवति। विभाऽवरि।
रेवत्। अस्मे॰। वि। उच्छ। सूनृताऽवति॥
युक्ष्व। हि। वाजिनीऽवति। अश्वान्। अद्य। अरुणान्। उषः।
अथ। नः। विश्वा। सौभगानि। आ। वह॥ २६॥

अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत्।
अर्वाग्रथं समनसा नि यच्छतं ॥ १६ ॥
यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः ।
आ न ऊर्जं वहतमश्विना युवं ॥ १७ ॥
एह देवा मयोभुवा दस्रा हिरण्यवर्तनी ।
उषर्बुधो वहंतु सोमपीतये ॥ १८ ॥

---

९३

अग्नीषोमाविमं सु मे शृणुतं वृषणा हवं ।
प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥ १ ॥
अग्नीषोमा यो अद्य वामिदं वचः सपर्यति ।
तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यं ॥ २ ॥
अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिं ।
स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ॥ ३ ॥
अग्नीषोमा चेति तद्वीर्यं वां यदमुष्णीतमवसं पणिं गाः ।
अवातिरतं बृसयस्य शेषोऽविंदतं ज्योतिरेकं बहुभ्यः ॥ ४ ॥
युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तं ।
युवं सिंधूँरभिशस्तेरवद्यादग्नीषोमावमुंचतं गृभीतान् ॥ ५ ॥
आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकं ॥ ६ ॥
अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथां ।
सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥ ७ ॥
यो अग्नीषोमा हविषा सपर्याद्देवद्रीचा मनसा यो घृतेन ।
तस्य व्रतं रक्षतं पातमंहसो विशे जनाय महि शर्म यच्छतं ॥ ८ ॥
अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥ ९ ॥
अग्नीषोमावनेन वां यो वां घृतेन दाशति । तस्मै दीदयतं बृहत् ॥ १० ॥
अग्नीषोमाविमानि नो युवं हव्या जुजोषतं । आ यातमुप नः सचा ॥ ११ ॥

अश्विना। वर्तिः। अस्मत्। आ। गोऽमत्। दस्रा। हिरण्यऽवत्।
अर्वाक्। रथं। सऽमनसा। नि। यच्छतं ॥
यौ। इत्था। श्लोकं। आ। दिवः। ज्योतिः। जनाय। चक्रथुः।
आ। नः। ऊर्जं। वहतं। अश्विना। युवं ॥
आ। इह। देवा। मयःऽभुवा। दस्रा। हिरण्यऽवर्तनी॰।
उषःऽबुधः। वहंतु। सोमऽपीतये ॥ २७ ॥

---

९३

अग्नीषोमौ। इमं। सु। मे। शृणुतं। वृषणा। हवं।
प्रति। सुऽउक्तानि। हर्यतं। भवतं। दाशुषे। मयः ॥
अग्नीषोमा। यः। अद्य। वां। इदं। वचः। सपर्यति।
तस्मै। धत्तं। सुऽवीर्यं। गवां। पोषं। सुऽअश्व्यं ॥
अग्नीषोमा। यः। आऽहुतिं। यः। वां। दाशात्। हविःऽकृतिं।
सः। प्रऽजया। सुऽवीर्यं। विश्वं। आयुः। वि। अश्नवत् ॥
अग्नीषोमा। चेति। तत्। वीर्यं। वां। यत्। अमुष्णीतं। अवसं। पणिं। गाः।
अव। अतिरतं। बृसयस्य। शेषः। अविंदतं। ज्योतिः। एकं। बहुऽभ्यः ॥
युवं। एतानि। दिवि। रोचनानि। अग्निः। च। सोम। सऽक्रतू॰। अधत्तं।
युवं। सिंधून्। अभिऽशस्तेः। अवद्यात्। अग्नीषोमौ। अमुंचतं। गृभीतान् ॥
आ। अन्यं। दिवः। मातरिश्वा। जभार। अमथ्नात्। अन्यं। परि। श्येनः। अद्रेः।
अग्नीषोमा। ब्रह्मणा। ववृधाना। उरुं। यज्ञाय। चक्रथुः। ऊं॰। लोकं ॥ २८ ॥
अग्नीषोमा। हविषः। प्रऽस्थितस्य। वीतं। हर्यतं। वृषणा। जुषेथां।
सुऽशर्माणा। सुऽअवसा। हि। भूतं। अथ। धत्तं। यजमानाय। शं। योः ॥
यः। अग्नीषोमा। हविषा। सपर्यात्। देवद्रीचा। मनसा। यः। घृतेन।
तस्य। व्रतं। रक्षतं। पातं। अंहसः। विशे। जनाय। महि। शर्म। यच्छतं ॥
अग्नीषोमा। सऽवेदसा। सऽहूती॰। वनतं। गिरः। सं। देवऽत्रा। बभूवथुः ॥
अग्नीषोमौ। अनेन। वां। यः। वां। घृतेन। दाशति। तस्मै। दीदयतं। बृहत् ॥
अग्नीषोमौ। इमानि। नः। युवं। हव्या। जुजोषतं। आ। यातं। उप। नः। सचा ॥

अग्नीषोमा पिपृतमर्वतो न आ प्यायंतामुस्रिया हव्यसूदः ।
अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमंतं ॥ १२ ॥ १४ ॥

---

## ९४

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ १ ॥
यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यं ।
स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ॥ २ ॥
शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदंत्याहुतं ।
त्वमादित्याँ आ वह तान्ह्यु१श्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ ३ ॥
भरामेध्मं कृणवामा हवींषि ते चितयंतः पर्वणापर्वणा वयं ।
जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ ४ ॥
विशां गोपा अस्य चरंति जंतवो द्विपच्च यदुत चतुष्पदक्तुभिः ।
चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥ ५ ॥
त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः ।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ६ ॥
यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्सन्तळिदिवाति रोचसे ।
रात्र्याश्चिदंधो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ७ ॥
पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥ ८ ॥
वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये अंति वा के चिदत्रिणः ।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ॥ ९ ॥
यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः ।
आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ॥ १० ॥
अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन् ।
सुगं तत्ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥ ११ ॥

अग्नीषोमा। पिपृतं। अर्वतः। नः। आ। प्यायंतां। उस्रियाः। हव्यऽसूदः।
अस्मे इति। बलानि। मघवत्ऽसु। धत्तं। कृणुतं। नः। अध्वरं। श्रुष्टिऽमंतं ॥ २९ ॥

---

९४

इमं। स्तोमं। अर्हते। जातऽवेदसे। रथंऽइव। सं। महेम। मनीषया।
भद्रा। हि। नः। प्रऽमतिः। अस्य। संऽसदि। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥
यस्मै। त्वं। आऽयजसे। सः। साधति। अनर्वा। क्षेति। दधते। सुऽवीर्यं।
सः। तूताव। न। एनं। अश्नोति। अंहतिः। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥
शकेम। त्वा। संऽइधं। साधय। धियः। त्वे इति। देवाः। हविः। अदंति। आऽहुतं।
त्वं। आदित्यान्। आ। वह। तान्। हि। उश्मसि। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥
भराम। इध्मं। कृणवाम। हवींषि। ते। चितयंतः। पर्वणाऽपर्वणा। वयं।
जीवातवे। प्रऽतरं। साधय। धियः। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥
विशां। गोपाः। अस्य। चरंति। जंतवः। द्विऽपत्। च। यत्। उत। चतुःऽपत्। अक्तुऽभिः।
चित्रः। प्रऽकेतः। उषसः। महान्। असि। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥३०॥
त्वं। अध्वर्युः। उत। होता। असि। पूर्व्यः। प्रऽशास्ता। पोता। जनुषा। पुरःऽहितः।
विश्वाः। विद्वान्। आर्त्विज्या। धीर। पुष्यसि। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥
यः। विश्वतः। सुऽप्रतीकः। सऽदृङ्। असि। दूरे। चित्। सन्। तळित्ऽइव। अति। रोचसे।
राम्र्याः। चित्। अंधः। अति। देव। पश्यसि। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥
पूर्वः। देवाः। भवतु। सुन्वतः। रथः। अस्माकं। शंसः। अभि। अस्तु। दुःऽध्यः।
तत्। आ। जानीत। उत। पुष्यत। वचः। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥
वधैः। दुःऽशंसान्। अप। दुःऽध्यः। जहि। दूरे। वा। ये। अंति। वा। के। चित्। अत्रिणः।
अथ। यज्ञाय। गृणते। सुऽगं। कृधि। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥
यत्। अयुक्थाः। अरुषा। रोहिता। रथे। वातऽजूता। वृषभस्यऽइव। ते। रवः।
आत्। इन्वसि। वनिनः। धूमऽकेतुना। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥३१॥
अध। स्वनात्। उत। बिभ्युः। पतत्रिणः। द्रप्साः। यत्। ते। यवसऽअदः। वि। अस्थिरन्।
सुऽगं। तत्। ते। तावकेभ्यः। रथेभ्यः। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥

अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः ।
मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ॥ १२ ॥
देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे ।
शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥ १३ ॥
तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः ।
दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव ॥ १४ ॥
यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता ।
यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥ १५ ॥
स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ १६ ॥

---

९५

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।
हरिरन्यस्यां भवति स्वधावान् छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ १ ॥
दशेमं त्वष्टुर्जनयंत गर्भमतंद्रासो युवतयो विभृत्रं ।
तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयंति ॥ २ ॥
त्रीणि जाना परि भूषंत्यस्य समुद्र एकं दिव्येकमप्सु ।
पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशासद्वि दधावनुष्ठु ॥ ३ ॥
क इमं वो निण्यमा चिकेत वत्सो मातॄर्जनयत स्वधाभिः ।
बह्वीनां गर्भो अपसामुपस्थान्महान्कविर्निश्चरति स्वधावान् ॥ ४ ॥
आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे ।
उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते ॥ ५ ॥
उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः ।
स दक्षाणां दक्षपतिर्बभूवांजंति यं दक्षिणतो हविर्भिः ॥ ६ ॥
उद्यंयमीति सवितेव बाहू उभे सिचौ यतते भीम ऋंजन् ।
उच्छुक्रमत्कमजते सिमस्मान्नवा मातृभ्यो वसना जहाति ॥ ७ ॥

अयं। मित्रस्यं। वरुणस्य। धायसे। अवऽयातां। मरुतां। हेळः। अद्भुतः।
मृळ। सु। नः। भूतु। एषां। मनः। पुनः। अग्ने। सख्ये। मा। रिषाम। वयं। तव॥
देवः। देवानां। असि। मित्रः। अद्भुतः। वसुः। वसूनां। असि। चारुः। अध्वरे।
शर्मन्। स्याम। तवं। सप्रथःऽतमे। अग्ने। सख्ये। मा। रिषाम। वयं। तवं॥
तत्। ते। भद्रं। यत्। संऽइद्धः। स्वे। दमे। सोमऽआहुतः। जरसे। मृळयत्ऽतमः।
दधासि। रत्नं। द्रविणं। च। दाशुषे। अग्ने। सख्ये। मा। रिषाम। वयं। तवं॥
यस्मै। त्वं। सुऽद्रविणः। ददाशः। अनागाःऽत्वं। अदिते। सर्वऽताता।
यं। भद्रेणं। शवसा। चोदयासि। प्रजाऽवता। राधसा। ते। स्याम॥
सः। त्वं। अग्ने। सौभगऽत्वस्यं। विद्वान्। अस्माकं। आयुः। प्र। तिर। इह। देव।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः॥३२॥६॥

---

९५

द्वे॰। विरूपे॰। चरतः। सुऽअर्थे॰। अन्याऽअन्या। वत्सं। उप। धापयेते॰।
हरिः। अन्यस्यां। भवति। स्वधाऽवान्। शुक्रः। अन्यस्यां। ददृशे। सुऽवर्चाः॥
दश। इमं। त्वष्टुः। जनयंत। गर्भं। अतंद्रासः। युवतयः। विऽभृत्रं।
तिग्मऽअनीकं। स्वऽयशसं। जनेषु। विऽरोचमानं। परि। सीं। नयंति॥
त्रीणि। जाना। परि। भूषंति। अस्य। समुद्रे। एकं। दिवि। एकं। अप्ऽसु।
पूर्वां। अनु। प्र। दिशं। पार्थिवानां। ऋतून्। प्रऽशासत्। वि। दधौ। अनुष्ठु॥
कः। इमं। वः। निण्यं। आ। चिकेत। वत्सः। मातॄः। जनयत। स्वधाभिः।
बह्वीनां। गर्भः। अपसां। उपऽस्थात्। महान्। कविः। निः। चरति। स्वधाऽवान्॥
आविःऽत्यः। वर्धते। चारुः। आसु। जिह्मानां। ऊर्ध्वः। स्वऽयशाः। उपऽस्थे।
उभे॰। त्वष्टुः। बिभ्यतुः। जायमानात्। प्रतीची॰। सिंहं। प्रति। जोषयेते॰॥१॥
उभे॰। भद्रे॰। जोषयेते॰। न। मेने॰। गावः। न। वाश्राः। उप। तस्थुः। एवैः।
सः। दक्षाणां। दक्षऽपतिः। बभूव। अंजंति। यं। दक्षिणतः। हविःऽभिः॥
उत। यंयमीति। सविताऽइव। बाहू॰। उभे॰। सिचौ। यतते। भीमः। ऋंजन्।
उत। शुक्रं। अत्कं। अजते। सिमस्मात्। नवा। मातृऽभ्यः। वसना। जहाति॥

त्वेषं रूपं कृणुत उत्तरं यत्संपृंचानः सदने गोभिरद्भिः ।
कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥ ८ ॥
उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।
विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ॥ ९ ॥
धन्वन्त्स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षां ।
विश्वा सनानि जठरेषु धत्तेऽंतर्नवासु चरति प्रसूषु ॥ १० ॥
एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ ११ ॥

---

## ९६

स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा ।
आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन्द्रविणोदां ॥ १ ॥
स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनां ।
विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन्द्रविणोदां ॥ २ ॥
तमीळत प्रथमं यज्ञसाधं विश आरीराहुतमृंजसानं ।
ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन्द्रविणोदां ॥ ३ ॥
स मातरिश्वा पुरुवारपुष्टिर्विदद्गातुं तनयाय स्वर्वित् ।
विशां गोपा जनिता रोदस्योर्देवा अग्निं धारयन्द्रविणोदां ॥ ४ ॥
नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची ।
द्यावाक्षामा रुक्मो अंतर्वि भाति देवा अग्निं धारयन्द्रविणोदां ॥ ५ ॥
रायो बुध्नः संगमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः ।
अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन्द्रविणोदां ॥ ६ ॥
नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षां ।
सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन्द्रविणोदां ॥ ७ ॥
द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् ।
द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥ ८ ॥

त्वेषं। रूपं। कृणुते। उत्ऽतरं। यत्। संऽपृंचानः। सदने। गोभिः। अत्ऽभिः।
कविः। बुध्नं। परि। मर्मृज्यते। धीः। सा। देवऽताता। संऽइतिः। बभूव॥
उरु। ते। ज्रयः। परि। एति। बुध्नं। विऽरोचमानं। महिषस्य। धाम।
विश्वेभिः। अग्ने। स्वयशःऽभिः। इद्धः। अदब्धेभिः। पायुऽभिः। पाहि। अस्मान्॥
धन्वन्। स्रोतः। कृणुते। गातुं। ऊर्मिं। शुक्रैः। ऊर्मिऽभिः। अभि। नक्षति। क्षां।
विश्वा। सनानि। जठरेषु। धत्ते। अंतः। नवासु। चरति। प्रऽसूषु॥
एव। नः। अग्ने। संऽइधा। वृधानः। रेवत्। पावक। श्रवसे। वि। भाहि।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः॥२॥

---

९६

सः। प्रत्नऽथा। सहसा। जायमानः। सद्यः। काव्यानि। बट्। अधत्त। विश्वा।
आपः। च। मित्रं। धिषणा। च। साधन्। देवाः। अग्निं। धारयन्। द्रविणःऽदां॥
सः। पूर्वया। निऽविदा। कव्यता। आयोः। इमाः। प्रऽजाः। अजनयत्। मनूनां।
विवस्वता। चक्षसा। द्यां। अपः। च। देवाः। अग्निं। धारयन्। द्रविणःऽदां॥
तं। ईळत। प्रथमं। यज्ञऽसाधं। विशः। आरीः। आऽहुतं। ऋंजसानं।
ऊर्जः। पुत्रं। भरतं। सृप्रऽदानुं। देवाः। अग्निं। धारयन्। द्रविणःऽदां॥
सः। मातरिश्वा। पुरुवारऽपुष्टिः। विदत्। गातुं। तनयाय। स्वःऽवित्।
विशां। गोपाः। जनिता। रोदस्योः। देवाः। अग्निं। धारयन्। द्रविणःऽदां॥
नक्तोषसा। वर्णं। आऽमेम्याने॰। धापयेते॰। शिशुं। एकं। संऽईची॰।
द्यावाक्षामा। रुक्मः। अंतः। वि। भाति। देवाः। अग्निं। धारयन्। द्रविणःऽदां॥३॥
रायः। बुध्नः। संऽगमनः। वसूनां। यज्ञस्य। केतुः। मन्मऽसाधनः। वेः॰।
अमृतऽत्वं। रक्षमाणासः। एनं। देवाः। अग्निं। धारयन्। द्रविणःऽदां॥
नु। च। पुरा। च। सदनं। रयीणां। जातस्य। च। जायमानस्य। च। क्षां।
सतः। च। गोपां। भवतः। च। भूरेः। देवाः। अग्निं। धारयन्। द्रविणःऽदां॥
द्रविणःऽदाः। द्रविणसः। तुरस्य। द्रविणःऽदाः। सनरस्य। प्र। यंसत्।
द्रविणःऽदाः। वीरऽवतीं। इषं। नः। द्रविणःऽदाः। रासते। दीर्घं। आयुः॥

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ ९ ॥

---

९७

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिं । अप नः शोशुचदघं ॥ १ ॥
सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघं ॥ २ ॥
प्र यद्भंदिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघं ॥ ३ ॥
प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयं । अप नः शोशुचदघं ॥ ४ ॥
प्र यदग्नेः सहस्वतो विश्वतो यंति भानवः । अप नः शोशुचदघं ॥ ५ ॥
त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अप नः शोशुचदघं ॥ ६ ॥
द्विषो नो विश्वतोमुखाति नावेव पारय । अप नः शोशुचदघं ॥ ७ ॥
स नः सिंधुमिव नावयाति पर्षा स्वस्तये । अप नः शोशुचदघं ॥ ८ ॥

---

९८

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥ १ ॥
पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तं ॥ २ ॥
वैश्वानर तव तत्सत्यमस्त्वस्मान्रायो मघवानः सचंतां ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ ३ ॥

---

९९

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः ॥ १ ॥

---

एव। नः। अग्ने। सम्ऽइधा। वृधानः। रेवत्। पावक। श्रवसे। वि। भाहि।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः॥४॥

---

९७

अप। नः। शोशुचत्। अघं। अग्ने। शुशुग्धि। आ। रयिं। अप। नः। शोशुचत्। अघं॥
सुऽक्षेत्रिया। सुगातुऽया। वसुऽया। च। यजामहे। अप। नः। शोशुचत्। अघं॥
प्र। यत्। भंदिष्ठः। एषां। प्र। अस्माकासः। च। सूरयः। अप। नः। शोशुचत्। अघं॥
प्र। यत्। ते। अग्ने। सूरयः। जायेमहि। प्र। ते। वयं। अप। नः। शोशुचत्। अघं॥
प्र। यत्। अग्नेः। सहस्वतः। विश्वतः। यंति। भानवः। अप। नः। शोशुचत्। अघं॥
त्वं। हि। विश्वतःऽमुख। विश्वतः। परिऽभूः। असि। अप। नः। शोशुचत्। अघं॥
द्विषः। नः। विश्वतःऽमुख। अति। नावाऽइव। पारय। अप। नः। शोशुचत्। अघं॥
सः। नः। सिंधुंऽइव। नावया। अति। पर्ष। स्वस्तये। अप। नः। शोशुचत्। अघं॥५॥

---

९८

वैश्वानरस्य। सुऽमतौ। स्याम। राजा। हि। कं। भुवनानां। अभिऽश्रीः।
इतः। जातः। विश्वं। इदं। वि। चष्टे। वैश्वानरः। यतते। सूर्येण॥
पृष्टः। दिवि। पृष्टः। अग्निः। पृथिव्यां। पृष्टः। विश्वाः। ओषधीः। आ। विवेश।
वैश्वानरः। सहसा। पृष्टः। अग्निः। सः। नः। दिवा। सः। रिषः। पातु। नक्तं॥
वैश्वानर। तव। तत्। सत्यं। अस्तु। अस्मान्। रायः। मघऽवानः। सचंतां।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः॥६॥

---

९९

जातऽवेदसे। सुनवाम। सोमं। अरातिऽयतः। नि। दहाति। वेदः।
सः। नः। पर्षत्। अति। दुःऽगानि। विश्वा। नावाऽइव। सिंधुं। दुःऽइता। अति। अग्निः॥७॥

---

## १००

स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट् ।
सतीनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विंद्र ऊती ॥ १ ॥
यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति ।
वृषंतमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो भवत्विंद्र ऊती ॥ २ ॥
दिवो न यस्य रेतसो दुघानाः पंथासो यंति शवसापरीताः ।
तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान्नो भवत्विंद्र ऊती ॥ ३ ॥
सो अंगिरोभिरंगिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन् ।
ऋग्मिभिर्ऋग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विंद्र ऊती ॥ ४ ॥
स सूनुभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान् ।
सनीळेभिः श्रवस्यानि तूर्वन्मरुत्वान्नो भवत्विंद्र ऊती ॥ ५ ॥
स मन्युमीः समदनस्य कर्तास्माकेभिर्नृभिः सूर्यं सनत् ।
अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान्नो भवत्विंद्र ऊती ॥ ६ ॥
तमूतयो रणयन् छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्रां ।
स विश्वस्य करुणस्येश एको मरुत्वान्नो भवत्विंद्र ऊती ॥ ७ ॥
तमप्संत शवस उत्सवेषु नरो नरमवसे तं धनाय ।
सो अंधे चित्तमसि ज्योतिर्विदन्मरुत्वान्नो भवत्विंद्र ऊती ॥ ८ ॥
स सव्येन यमति व्राधतश्चित्स दक्षिणे संगृभीता कृतानि ।
स कीरिणा चित्सनिता धनानि मरुत्वान्नो भवत्विंद्र ऊती ॥ ९ ॥
स ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्व१द्य ।
स पौंस्येभिरभिभूरशस्तीर्मरुत्वान्नो भवत्विंद्र ऊती ॥ १० ॥
स जामिभिर्यत्समजाति मीळ्हेऽजामिभिर्वा पुरुहूत एवैः ।
अपां तोकस्य तनयस्य जेषे मरुत्वान्नो भवत्विंद्र ऊती ॥ ११ ॥
स वज्रभृद्दस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा ।
चम्रीषो न शवसा पांचजन्यो मरुत्वान्नो भवत्विंद्र ऊती ॥ १२ ॥
तस्य वज्रः क्रंदति स्मत्स्वर्षा दिवो न त्वेषो रवथः शिमीवान् ।
तं सचंते सनयस्तं धनानि मरुत्वान्नो भवत्विंद्र ऊती ॥ १३ ॥

१००

सः। यः। वृषा। वृष्ण्येभिः। सम्ऽओकाः। महः। दिवः। पृथिव्याः। च। सम्ऽराट्।
सतीनऽसत्वा। हव्यः। भरेषु। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
यस्य। अनाप्तः। सूर्यस्यऽइव। यामः। भरेऽभरे। वृत्रऽहा। शुष्मः। अस्ति।
वृषन्ऽतमः। सखिऽभिः। स्वेभिः। एवैः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
दिवः। न। यस्य। रेतसः। दुघानाः। पंथासः। यंति। शवसा। अपरिऽइताः।
तरत्ऽद्वेषाः। ससहिः। पौंस्येभिः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
सः। अंगिरःऽभिः। अंगिरःऽतमः। भूत्। वृषा। वृषऽभिः। सखिऽभिः। सखा। सन्।
ऋग्मिऽभिः। ऋग्मी। गातुऽभिः। ज्येष्ठः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
सः। सूनुऽभिः। न। रुद्रेभिः। ऋभ्वा। नृऽसह्ये। ससह्वान्। अमित्रान्।
सऽनीळेभिः। श्रवस्यानि। तूर्वन्। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥ ८ ॥
सः। मन्युऽमीः। सऽमदनस्य। कर्ता। अस्माकेभिः। नृऽभिः। सूर्यं। सनत्।
अस्मिन्। अहन्। सत्ऽपतिः। पुरुऽहूतः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
तं। ऊतयः। रणयन्। शूरऽसातौ। तं। क्षेमस्य। क्षितयः। कृण्वत। त्रां।
सः। विश्वस्य। करुणस्य। ईशे। एकः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
तं। अप्संत। शवसः। उत्ऽसवेषु। नरः। नरं। अवसे। तं। धनाय।
सः। अंधे। चित्। तमसि। ज्योतिः। विदत्। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
सः। सव्येन। यमति। व्राधतः। चित्। सः। दक्षिणे। सम्ऽगृभीता। कृतानि।
सः। कीरिणा। चित्। सनिता। धनानि। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
सः। ग्रामेभिः। सनिता। सः। रथेभिः। विदे। विश्वाभिः। कृष्टिऽभिः। नु। अद्य।
सः। पौंस्येभिः। अभिऽभूः। अशस्तीः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥ ९ ॥
सः। जामिऽभिः। यत्। सम्ऽअजाति। मीळ्हे। अजामिऽभिः। वा। पुरुऽहूतः। एवैः।
अपां। तोकस्य। तनयस्य। जेषे। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
सः। वज्रऽभृत्। दस्युऽहा। भीमः। उग्रः। सहस्रऽचेताः। शतऽनीथः। ऋभ्वा।
चम्रीषः। न। शवसा। पांचऽजन्यः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥
तस्य। वज्रः। क्रंदति। स्मत्। स्वःऽसाः। दिवः। न। त्वेषः। रवथः। शिमीऽवान्।
तं। सचंते। सनयः। तं। धनानि। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥

यस्याजस्रं शवसा मानमुक्थं परिभुजद्रोदसी विश्वतः सीं ।
स पारिषत्क्रतुभिर्मंदसानो मरुत्वान्नो भवत्विंद्र ऊती ॥ १४ ॥
न यस्य देवा देवता न मर्ता आपश्चन शवसो अंतमापुः ।
स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विंद्र ऊती ॥ १५ ॥
रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य ।
वृषण्वंतं बिभ्रती धूर्षु रथं मंद्रा चिकेत नाहुषीषु विक्षु ॥ १६ ॥
एतत्त्यत्त इंद्र वृष्ण उक्थं वार्षागिरा अभि गृणंति राधः ।
ऋज्राश्वः प्रष्टिभिरंबरीषः सहदेवो भयमानः सुराधाः ॥ १७ ॥
दस्यून् छिम्यूंश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत् ।
सनत्क्षेत्रं सखिभिः श्वित्न्येभिः सनत्सूर्यं सनदपः सुवज्रः ॥ १८ ॥
विश्वाहेंद्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजं ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ १९ ॥

---

१०१

प्र मंदिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वंतं सख्याय हवामहे ॥ १ ॥
यो व्यंसं जाहृषाणेन मन्युना यः शंबरं यो अहन्पिप्रुमव्रतं ।
इंद्रो यः शुष्णमशुषं न्यावृणङ्मरुत्वंतं सख्याय हवामहे ॥ २ ॥
यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्यः ।
यस्येंद्रस्य सिंधवः सश्चति व्रतं मरुत्वंतं सख्याय हवामहे ॥ ३ ॥
यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः ।
वीळोश्चिदिंद्रो यो असुन्वतो वधो मरुत्वंतं सख्याय हवामहे ॥ ४ ॥
यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविंदत् ।
इंद्रो यो दस्यूँरधराँ अवातिरन्मरुत्वंतं सख्याय हवामहे ॥ ५ ॥
यः शूरेभिर्हव्यो यश्च भीरुभिर्यो धावद्भिर्हूयते यश्च जिग्युभिः ।
इंद्रं यं विश्वा भुवनाभि संदधुर्मरुत्वंतं सख्याय हवामहे ॥ ६ ॥

यस्य । अजस्रं । शवसा । मानं । उक्थं । परिऽभुजत् । रोदसी इति । विश्वतः । सीं ।
सः । पारिषत् । क्रतुऽभिः । मंदसानः । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥
न । यस्य । देवाः । देवता । न । मर्ताः । आपः । चन । शवसः । अंतं । आपुः ।
सः । प्रऽरिक्वा । त्वक्षसा । क्ष्मः । दिवः । च । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ १० ॥
रोहित् । श्यावा । सुमत्ऽअंशुः । ललामीः । द्युक्षा । राये । ऋज्रऽअश्वस्य ।
वृषणऽवंतं । बिभ्रती । धूःऽसु । रथं । मंद्रा । चिकेत । नाहुषीषु । विक्षु ॥
एतत् । त्यत् । ते । इंद्र । वृष्णे । उक्थं । वार्षागिराः । अभि । गृणंति । राधः ।
ऋज्रऽअश्वः । प्रष्टिऽभिः । अंबरीषः । सहऽदेवः । भयमानः । सुऽराधाः ॥
दस्यून् । शिम्यून् । च । पुरुऽहूतः । एवैः । हत्वा । पृथिव्यां । शर्वा । नि । बर्हीत् ।
सनत् । क्षेत्रं । सखिऽभिः । श्वित्न्येभिः । सनत् । सूर्यं । सनत् । अपः । सुऽवज्रः ॥
विश्वाहा । इंद्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽह्वृताः । सनुयाम । वाजं ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥ ११ ॥

---

१०१

प्र । मंदिने । पितुऽमत् । अर्चत । वचः । यः । कृष्णऽगर्भाः । निःऽअहन् । ऋजिश्वना ।
अवस्यवः । वृषणं । वज्रऽदक्षिणं । मरुत्वंतं । सख्याय । हवामहे ॥
यः । विऽअंसं । जहृषाणेन । मन्युना । यः । शंबरं । यः । अहन् । पिप्रुं । अव्रतं ।
इंद्रः । यः । शुष्णं । अशुषं । नि । अवृणक् । मरुत्वंतं । सख्याय । हवामहे ॥
यस्य । द्यावापृथिवी इति । पौंस्यं । महत् । यस्य । व्रते । वरुणः । यस्य । सूर्यः ।
यस्य । इंद्रस्य । सिंधवः । सश्चति । व्रतं । मरुत्वंतं । सख्याय । हवामहे ॥
यः । अश्वानां । यः । गवां । गोऽपतिः । वशी । यः । आरितः । कर्मणिऽकर्मणि । स्थिरः ।
वीळोः । चित् । इंद्रः । यः । असुन्वतः । वधः । मरुत्वंतं । सख्याय । हवामहे ॥
यः । विश्वस्य । जगतः । प्राणतः । पतिः । यः । ब्रह्मणे । प्रथमः । गाः । अविंदत् ।
इंद्रः । यः । दस्यून् । अधरान् । अवऽअतिरत् । मरुत्वंतं । सख्याय । हवामहे ॥
यः । शूरेभिः । हव्यः । यः । च । भीरुऽभिः । यः । धावत्ऽभिः । हूयते । यः । च । जिग्युऽभिः ।
इंद्रं । यं । विश्वा । भुवना । अभि । संऽदधुः । मरुत्वंतं । सख्याय । हवामहे ॥ १२ ॥

रुद्राणामेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथु ज्रयः ।
इंद्रं मनीषा अभ्यर्चति श्रुतं मरुत्वंतं सख्याय हवामहे ॥ ७ ॥
यद्वा मरुत्वः परमे सधस्थे यद्वावमे वृजने मादयासे ।
अत आ याह्यध्वरं नो अच्छा त्वाया हविश्चकृमा सत्यराधः ॥ ८ ॥
त्वायेंद्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः ।
अधा नियुत्वः सगणो मरुद्भिरस्मिन्यज्ञे बर्हिषि मादयस्व ॥ ९ ॥
मादयस्व हरिभिर्ये त इंद्र वि ष्यस्व शिप्रे वि सृजस्व धेने ।
आ त्वा सुशिप्र हरयो वहंतूशन्हव्यानि प्रति नो जुषस्व ॥ १० ॥
मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिंद्रेण सनुयाम वाजं ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ ११ ॥

---

१०२

इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे ।
तमुत्सवे च प्रसवे च सासहिमिंद्रं देवासः शवसामदन्ननु ॥ १ ॥
अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः ।
अस्मे सूर्याचंद्रमसाभिचक्षे श्रद्धे कमिंद्र चरतो वितर्तुरं ॥ २ ॥
तं स्मा रथं मघवन्प्राव सातये जैत्रं यं ते अनुमदाम संगमे ।
आजा न इंद्र मनसा पुरुष्टुत त्वायद्भ्यो मघवन् छर्म यच्छ नः ॥ ३ ॥
वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे ।
अस्मभ्यमिंद्र वरिवः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ॥ ४ ॥
नाना हि त्वा हवमाना जना इमे धनानां धर्तरवसा विपन्यवः ।
अस्माकं स्मा रथमा तिष्ठ सातये जैत्रं हींद्र निभृतं मनस्तव ॥ ५ ॥
गोजिता बाहू अमितक्रतुः सिमः कर्मन्कर्मन् छतमूतिः खजंकरः ।
अकल्प इंद्रः प्रतिमानमोजसाथा जना वि ह्वयंते सिषासवः ॥ ६ ॥
उत्ते शतान्मघवन्नुच्च भूयस उत्सहस्राद्रिरिचे कृष्टिषु श्रवः ।
अमात्रं त्वा धिषणा तित्विषे मह्यधा वृत्राणि जिघ्नसे पुरंदर ॥ ७ ॥

यज्ञो हि ष्मेंद्रं कश्चिदृंधन् जुंहुराणश्चिन्मनसा परियन् ।
तीर्थे नाच्छां तातृषाणमोको दीर्घो न सिध्रमा कृणोत्यध्वां ॥ ११ ॥
मो षू णं इंद्रात्रं पृत्सु देवैरस्ति हि ष्मां ते शुष्मिन्नवयाः ।
महश्चिद्यस्यं मीळ्हुषों यव्या हविष्मंतो मरुतो वंदंते गीः ॥ १२ ॥
एषः स्तोमं इंद्र तुभ्यमस्मे एतेनं गातुं हरिवो विदो नः ।
आ नो ववृत्याः सुवितायं देव विद्यामेषं वृजनं जीरदांनुं ॥ १३ ॥

---

१७४

त्वं राजेंद्र ये चं देवा रक्षा नृन्पाह्यसुर त्वमस्मान् ।
त्वं सत्पतिर्मघवा नस्तरुत्रस्त्वं सत्यो वसवानः सहोदाः ॥ १ ॥
दनो विशं इंद्र मृध्रवांचः सप्त यत्पुरः शर्म शारदीर्दर्त् ।
ऋणोरपो अंनवद्यार्णा यूने वृत्रं पुरुकुत्साय रंधीः ॥ २ ॥
अजा वृतं इंद्र शूरपत्नीर्द्यां च येभिः पुरुहूत नूनं ।
रक्षो अग्निमशुषं तूर्वयाणं सिंहो न दमे अपांसि वस्तोः ॥ ३ ॥
शेषन्नु त इंद्र सस्मिन्योनौ प्रशंस्तये पवीरवस्य मह्ना ।
सृजदर्णांस्यव यद्युधा गास्तिष्ठद्धरीं धृषता मृष्ट वाजांन् ॥ ४ ॥
वह कुत्समिंद्र यस्मिंश्चाकन्त्स्यूमन्यू ऋज्रा वातस्याश्वां ।
प्र सूरश्चक्रं वृहतादभीकेऽभि स्पृधों यासिषद्वज्रंबाहुः ॥ ५ ॥
जघन्वाँ इंद्र मित्रेरूञ्चोदप्रंवृद्धो हरिवो अदाशून् ।
प्र ये पश्यन्नर्यमणं सचायोस्त्वयां शूर्ता वहंमाना अपंत्यं ॥ ६ ॥
रपंत्कविरिंद्रार्कसातौ क्षां दासायोपबर्हणीं कः ।
करत्तिस्रो मघवा दानुंचित्रा नि दुर्योणे कुयंवाचं मृधि श्रेत् ॥ ७ ॥
सना ता तं इंद्र नव्या आगुः सहो नभोऽविरणाय पूर्वीः ।
भिनत्पुरो न भिदो अदेवीर्ननमो वधरदेवस्य पीयोः ॥ ८ ॥
त्वं धुनिरिंद्र धुनिमतीर्ऋणोरपः सीरा न स्रवंतीः ।
प्र यत्समुद्रमति शूर पर्षि पारयां तुर्वशं यदुं स्वस्ति ॥ ९ ॥

यज्ञः । हि । स्म । इंद्रं । कः । चित् । ऋंधन् । जुहुराणः । चित् । मनसा । परिऽयन् ।
तीर्थे । न । अच्छं । ततृषाणं । ओकः । दीर्घः । न । सिध्रं । आ । कृणोति । अध्वा ॥
मो॰ । सु । नः । इंद्र । अत्रं । पृत्ऽसु । देवैः । अस्ति । हि । स्म । ते । शुष्मिन् । अवऽयाः ।
महः । चित् । यस्य । मीळ्हुषः । यव्या । हविष्मतः । मरुतः । वंदते । गीः ॥
एषः । स्तोमः । इंद्र । तुभ्यं । अस्मे॰ । एतेन । गातुं । हरिऽवः । विदः । नः ।
आ । नः । ववृत्याः । सुवितायं । देव । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ १५ ॥

---

१७४

त्वं । राजा । इंद्र । ये । च । देवाः । रक्ष । नृन् । पाहि । असुर । त्वं । अस्मान् ।
त्वं । सत्ऽपतिः । मघऽवा । नः । तरुत्रः । त्वं । सत्यः । वसवानः । सहःऽदाः ॥
दनः । विशः । इंद्र । मृध्रऽवाचः । सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् ।
ऋणोः । अपः । अनवद्य । अर्णाः । यूने । वृत्रं । पुरुऽकुत्साय । रंधीः ॥
अज । वृतः । इंद्र । शूरऽपत्नीः । द्यां । च । येभिः । पुरुऽहूत । नूनं ।
रक्षो॰ । अग्निं । अशुषं । तूर्वयाणं । सिंहः । न । दमे । अपांसि । वस्तोः ॥
शेषन् । नु । ते । इंद्र । सस्मिन् । योनौ । प्रऽशस्तये । पवीरवस्य । मह्ना ।
सृजत् । अर्णांसि । अव । यत् । युधा । गाः । तिष्ठत् । हरी॰ । धृषता । मृष्ट । वाजान् ॥
वह । कुत्सं । इंद्र । यस्मिन् । चाकन् । स्यूमन्यू॰ । ऋज्रा । वातस्य । अश्वा ।
प्र । सूरः । चक्रं । वृहतात् । अभीके । अभि । स्पृधः । यासिषत् । वज्रऽबाहुः ॥ १६ ॥
जघन्वान् । इंद्र । मित्रेरून् । चोदऽप्रवृद्धः । हरिऽवः । अदाशून् ।
प्र । ये । पश्यन् । अर्यमणं । सचा । आयोः । त्वया । शूर्ताः । वहमानाः । अपत्यं ॥
रपत् । कविः । इंद्र । अर्कऽसातौ । क्षां । दासाय । उपऽबर्हणीं । क॰ ।
करत् । तिस्रः । मघऽवा । दानुऽचित्राः । नि । दुर्योणे । कुयवाचं । मृधि । श्रेत् ॥
सना । ता । ते । इंद्र । नव्याः । आ । अगुः । सहः । नभः । अविऽरणाय । पूर्वीः ।
भिनत् । पुरः । न । भिदः । अदेवीः । ननमः । वधः । अदेवस्य । पीयोः ॥
त्वं । धुनिः । इंद्र । धुनिऽमतीः । ऋणोः । अपः । सीराः । न । स्रवंतीः ।
प्र । यत् । समुद्रं । अति । शूर । पर्षि । पारय । तुर्वशं । यदुं । स्वस्ति ॥

त्वमस्माकमिंद्र विश्वध स्या अवृकतमो नरां नृपाता ।
स नो विश्वासां स्पृधां सहोदा विद्यामेषं वृजनं जीरदानुं ॥ १० ॥

---

१७५

मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः ।
वृषा ते वृष्ण इंदुर्वाजी सहस्रसातमः ॥ १ ॥
आ नस्ते गंतु मत्सरो वृषा मदो वरेण्यः ।
सहावाँ इंद्र सानसिः पृतनाषाळमर्त्यः ॥ २ ॥
त्वं हि शूरः सनिता चोदयो मनुषो रथं ।
सहावाँ दस्युमव्रतमोषः पात्रं न शोचिषा ॥ ३ ॥
मुषाय सूर्यं कवे चक्रमीशान ओजसा ।
वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥ ४ ॥
शुष्मिंतमो हि ते मदो द्युम्निंतम उत क्रतुः ।
वृत्रघ्ना वरिवोविदा मंसीष्ठा अश्वसातमः ॥ ५ ॥
यथा पूर्वेभ्यो जरितृभ्य इंद्र मय इवापो न तृष्यते बभूथ ।
तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुं ॥ ६ ॥

---

१७६

मत्सि नो वस्यइष्टय इंद्रमिंदो वृषा विश ।
ऋघायमाण इन्वसि शत्रुमंति न विंदसि ॥ १ ॥
तस्मिन्ना वेशया गिरो य एकश्चर्षणीनां ।
अनु स्वधा यमुप्यते यवं न चर्कृषद्वृषा ॥ २ ॥
यस्य विश्वानि हस्तयोः पंच क्षितीनां वसु ।
स्पाशयस्व यो अस्मध्रुग्दिव्येवाशनिर्जहि ॥ ३ ॥
असुन्वंतं समं जहि दूणाशं यो न ते मयः ।
अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते ॥ ४ ॥

त्वं। अस्माकं। इंद्र। विश्वधं। स्याः। अवृकऽतमः। नरां। नृऽपाता।
सः। नः। विश्वासां। स्पृधां। सहःऽदाः। विद्याम। इषं। वृजनं। जीरऽदानुं ॥ १७ ॥

---

१७५

मत्सि। अपायि। ते। महः। पात्रस्यऽइव। हरिऽवः। मत्सरः। मदः।
वृषा। ते। वृष्णे। इंदुः। वाजी। सहस्रऽसातमः ॥
आ। नः। ते। गंतु। मत्सरः। वृषा। मदः। वरेण्यः।
सहऽवान्। इंद्र। सानसिः। पृतनाषाट्। अमर्त्यः ॥
त्वं। हि। शूरः। सनिता। चोदयः। मनुषः। रथं।
सहऽवान्। दस्युं। अव्रतं। ओषः। पात्रं। न। शोचिषा ॥
मुषाय। सूर्यं। कवे। चक्रं। ईशानः। ओजसा।
वह। शुष्णाय। वधं। कुत्सं। वातस्य। अश्वैः ॥
शुष्मिन्ऽतमः। हि। ते। मदः। द्युम्निन्ऽतमः। उत। क्रतुः।
वृत्रऽघ्ना। वरिवःऽविदा। मंसीष्ठाः। अश्वऽसातमः ॥
यथा। पूर्वेभ्यः। जरितृऽभ्यः। इंद्र। मयःऽइव। आपः। न। तृष्यते। बभूथ।
तां। अनु। त्वा। निऽविदं। जोहवीमि। विद्याम। इषं। वृजनं। जीरऽदानुं ॥ १८ ॥

---

१७६

मत्सि। नः। वस्यःऽइष्टये। इंद्रं। इंदो॰। वृषा। आ। विश।
ऋघायमाणः। इन्वसि। शत्रुं। अंति। न। विंदसि ॥
तस्मिन्। आ। वेशय। गिरः। यः। एकः। चर्षणीनां।
अनु। स्वधा। यं। उप्यते। यवं। न। चर्कृषत्। वृषा ॥
यस्य। विश्वानि। हस्तयोः। पंच। क्षितीनां। वसु।
स्पाशयस्व। यः। अस्मऽध्रुक्। दिव्याऽइव। अशनिः। जहि ॥
असुन्वंतं। समं। जहि। दुःऽनशं। यः। न। ते। मयः।
अस्मभ्यं। अस्य। वेदनं। दद्धि। सूरिः। चित्। ओहते ॥

आवो यस्य द्विबर्हसोऽर्केषु सानुषगसत्।
आजाविंद्रस्येंदो प्रावो वाजेषु वाजिनं ॥ ५ ॥
यथा पूर्वेभ्यो जरितृभ्य इंद्र मय इवापो न तृष्यते बभूथ ।
तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुं ॥ ६ ॥

---

## १७७

आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इंद्रः ।
स्तुतः श्रवस्यन्नवसोप मद्रिग्युक्त्वा हरी वृषणा याह्यर्वाङ् ॥ १ ॥
ये ते वृषणो वृषभास इंद्र ब्रह्मयुजो वृषरथासो अत्याः ।
ताँ आ तिष्ठ तेभिरा याह्यर्वाङ् हवामहे त्वा सुत इंद्र सोमे ॥ २ ॥
आ तिष्ठ रथं वृषणं वृषा ते सुतः सोमः परिषिक्ता मधूनि ।
युक्त्वा वृषभ्यां वृधभ क्षितीनां हरिभ्यां याहि प्रवतोप मद्रिक् ॥ ३ ॥
अयं यज्ञो देवया अयं मियेध इमा ब्रह्माण्ययमिंद्र सोमः ।
स्तीर्णं बर्हिरा तु शक्र प्र याहि पिबा निषद्य वि मुचा हरी इह ॥ ४ ॥
ओ सुष्टुत इंद्र याह्यर्वाङुप ब्रह्माणि मान्यस्य कारोः ।
विद्याम वस्तोरवसा गृणंतो विद्यामेषं वृजनं जीरदानुं ॥ ५ ॥

---

## १७८

यद्ध स्या त इंद्र श्रुष्टिरस्ति यया बभूथ जरितृभ्य ऊती ।
मा नः कामं महयंतमा धग्विश्वा ते अश्यां पर्याप आयोः ॥ १ ॥
न घा राजेंद्र आ दभन्नो या नु स्वसारा कृणवंत योनौ ।
आपश्चिदस्मै सुतुका अवेषन्गमन्न इंद्रः सख्या वयश्च ॥ २ ॥
जेता नृभिरिंद्रः पृत्सु शूरः श्रोता हवं नाधमानस्य कारोः ।
प्रभर्ता रथं दाशुष उपाक उद्यंता गिरो यदि च त्मना भूत् ॥ ३ ॥
एवा नृभिरिंद्रः सुश्रवस्या प्रखादः पृक्षो अभि मित्रिणो भूत् ।
समर्य इषः स्तवते विवाचि सत्राकरो यजमानस्य शंसः ॥ ४ ॥

आवः। यस्य। द्विऽबर्हसः। अर्केषु। सानुषक्। असत्।
आजौ। इंद्रस्य। इंदो इति। प्र। आवः। वाजेषु। वाजिनं॥
यथा। पूर्वेभ्यः। जरितृऽभ्यः। इंद्र। मयःऽइव। आपः। न। तृष्यते। बभूथ।
तां। अनु। त्वा। निऽविदं। जोहवीमि। विद्याम। इषं। वृजनं। जीरऽदानुं॥ १९॥

---

१७७

आ। चर्षणिऽप्राः। वृषभः। जनानां। राजा। कृष्टीनां। पुरुऽहूतः। इंद्रः।
स्तुतः। श्रवस्यन्। अवसा। उप। मद्रिक्। युक्त्वा। हरी इति। वृषणा। आ। याहि। अर्वाङ्॥
ये। ते। वृषणः। वृषभासः। इंद्र। ब्रह्मऽयुजः। वृषऽरथासः। अत्याः।
तान्। आ। तिष्ठ। तेभिः। आ। याहि। अर्वाङ्। हवामहे। त्वा। सुते। इंद्र। सोमे॥
आ। तिष्ठ। रथं। वृषणं। वृषा। ते। सुतः। सोमः। परिऽसिक्ता। मधूनि।
युक्त्वा। वृषऽभ्यां। वृषभ। क्षितीनां। हरिऽभ्यां। याहि। प्रऽवता। उप। मद्रिक्॥
अयं। यज्ञः। देवऽयाः। अयं। मियेधः। इमा। ब्रह्माणि। अयं। इंद्र। सोमः।
स्तीर्णं। बर्हिः। आ। तु। शक्र। प्र। याहि। पिब। निऽसद्य। वि। मुच। हरी इति। इह॥
ओ इति। सुऽस्तुतः। इंद्र। याहि। अर्वाङ्। उप। ब्रह्माणि। मान्यस्य। कारोः।
विद्याम। वस्तोः। अवसा। गृणंतः। विद्याम। इषं। वृजनं। जीरऽदानुं॥ २०॥

---

१७८

यत्। ह। स्या। ते। इंद्र। श्रुष्टिः। अस्ति। यया। बभूथ। जरितृऽभ्यः। ऊती।
मा। नः। कामं। महयंतं। आ। धक्। विश्वा। ते। अश्यां। परि। आपः। आयोः॥
न। घ। राजा। इंद्रः। आ। दभत्। नः। या। नु। स्वसारा। कृणवंत। योनौ।
आपः। चित्। अस्मै। सुऽतुकाः। अवेषन्। गमत्। नः। इंद्रः। सख्या। वयः। च॥
जेता। नृऽभिः। इंद्रः। पृत्ऽसु। शूरः। श्रोता। हवं। नाधमानस्य। कारोः।
प्रऽभर्ता। रथं। दाशुषः। उपाके। उत्ऽयंता। गिरः। यदि। च। त्मना। भूत्॥
एव। नृऽभिः। इंद्रः। सुऽश्रवस्या। प्रऽखादः। पृक्षः। अभि। मित्रिणः। भूत्।
सऽमर्ये। इषः। स्तवते। विऽवाचि। सत्राऽकरः। यजमानस्य। शंसः॥

त्वया वयं मघवन्निंद्र शत्रूनभि ष्याम महतो मन्यमानान् ।
त्वं त्राता त्वमु नो वृधे भूर्विद्यामेषं वृजनं जीरदानुं ॥ ५ ॥

---

१७९

पूर्वीरहं शरदः शश्रमाणा दोषा वस्तोरुषसो जरयंतीः ।
मिनाति श्रियं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः ॥ १ ॥
ये चिद्धि पूर्व ऋतसाप आसन्त्साकं देवेभिरवदन्नृतानि ।
ते चिदवासुर्नह्यंतमापुः समू नु पत्नीर्वृषभिर्जगम्युः ॥ २ ॥
न मृषा श्रांतं यदवंति देवा विश्वा इत्स्पृधो अभ्यश्नवाव ।
जयावेदत्र शतनीथमाजिं यत्सम्यंचा मिथुनावभ्यजाव ॥ ३ ॥
नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित् ।
लोपामुद्रा वृषणं नी रिणाति धीरमधीरा धयति श्वसंतं ॥ ४ ॥
इमं नु सोममंतितो हृत्सु पीतमुप ब्रुवे ।
यत्सीमागश्चकृमा तत्सु मृळतु पुलुकामो हि मर्त्यः ॥ ५ ॥
अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः ।
उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥ ६ ॥ २३ ॥

---

१८०

युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णांसि दीयत् ।
हिरण्यया वां पवयः प्रुषायन्मध्वः पिबंता उषसः सचेथे ॥ १ ॥
युवमत्यस्याव नक्षथो यद्विपत्मनो नर्यस्य प्रयज्योः ।
स्वसा यद्वां विश्वगूर्ती भराति वाजायेट्टे मधुपाविषे च ॥ २ ॥
युवं पय उस्रियायामधत्तं पक्वमामायामव पूर्व्यं गोः ।
अंतर्यद्वनिनो वामृतप्सू ह्वारो न शुचिर्यजते हविष्मान् ॥ ३ ॥
युवं ह घर्मं मधुमंतमत्रयेऽपो न क्षोदोऽवृणीतमेषे ।
तद्वां नरावश्विना पश्वइष्टी रथ्येव चक्रा प्रति यंति मध्वः ॥ ४ ॥

त्वया । वयं । मघऽवन् । इंद्र । शत्रून् । अभि । स्याम । महतः । मन्यमानान् ।
त्वं । त्राता । त्वं । ऊं॰ । नः । वृधे । भूः । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ २१ ॥

---

१७९

पूर्वीः । अहं । शरदः । शश्रमाणा । दोषाः । वस्तोः । उषसः । जरयंतीः ।
मिनाति । श्रियं । जरिमा । तनूनां । अपि । ऊं॰ । नु । पत्नीः । वृषणः । जगम्युः ॥
ये । चित् । हि । पूर्वे । ऋतऽसापः । आसन् । साकं । देवेभिः । अवदन् । ऋतानि ।
ते । चित् । अव । असुः । नहि । अंतं । आपुः । सं । ऊं॰ । नु । पत्नीः । वृषऽभिः । जगम्युः ॥
न । मृषा । श्रांतं । यत् । अवंति । देवाः । विश्वाः । इत् । स्पृधः । अभि । अश्नवाव ।
जयाव । इत् । अत्र । शतऽनीथं । आजिं । यत् । सम्यंचा । मिथुनौ । अभि । अजाव ॥
नदस्य । मा । रुधतः । कामः । आ । अगन् । इतः । आऽजातः । अमुतः । कुतः । चित् ।
लोपामुद्रा । वृषणं । निः । रिणाति । धीरं । अधीरा । धयति । श्वसंतं ॥
इमं । नु । सोमं । अंतितः । हृत्ऽसु । पीतं । उप । ब्रुवे ।
तत् । सीं । आगः । चकृम । तत् । सु । मृळतु । पुलुऽकामः । हि । मर्त्यः ॥
अगस्त्यः । खनमानः । खनित्रैः । प्रऽजां । अपत्यं । बलं । इच्छमानः ।
उभौ । वर्णौ । ऋषिः । उग्रः । पुपोष । सत्याः । देवेषु । आऽशिषः । जगाम ॥ २२ ॥

---

१८०

युवोः । रजांसि । सुऽयमासः । अश्वाः । रथः । यत् । वां । परि । अर्णांसि । दीयत् ।
हिरण्ययाः । वां । पवयः । प्रुषायन् । मध्वः । पिबंतौ । उषसः । सचेथे॰ ॥
युवं । अत्यस्य । अव । नक्षथः । यत् । विऽपत्मनः । नर्यस्य । प्रऽयज्योः ।
स्वसा । यत् । वां । विश्वऽगूर्ती॰ । भराति । वाजाय । ईट्टे । मधुऽपौ । इषे । च ॥
युवं । पयः । उस्रियायां । अधत्तं । पक्वं । आमायां । अव । पूर्व्यं । गोः ।
अंतः । यत् । वनिनः । वां । ऋतऽप्सू॰ । ह्वारः । न । शुचिः । यजते । हविष्मान् ॥
युवं । ह । घर्मं । मधुऽमंतं । अत्रये । अपः । न । क्षोदः । अवृणीतं । एषे ।
तत् । वां । नरौ । अश्विना । पश्वःऽइष्टिः । रथ्याऽइव । चक्रा । प्रति । यंति । मध्वः ॥

आ वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रिः ।
अपः क्षोणी सचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ॥ ५ ॥
नि यद्युवेथे नियुतः सुदानू उप स्वधाभिः सृजथः पुरंधिं ।
प्रेषद्वेषद्वातो न सूरिरा महे ददे सुव्रतो न वाजं ॥ ६ ॥
वयं चिद्धि वां जरितारः सत्या विपन्यामहे वि पणिर्हितावान् ।
अधा चिद्धि ष्माश्विनावनिंद्या पाथो हि ष्मा वृषणावंतिदेवं ॥ ७ ॥
युवां चिद्धि ष्माश्विनावनु द्यून्विरुद्रस्य प्रस्रवणस्य सातौ ।
अगस्त्यो नरां नृषु प्रशस्तः काराधुनीव चितयत्सहस्रैः ॥ ८ ॥
प्र यद्वहेथे महिना रथस्य प्र स्यंद्रा याथो मनुषो न होता ।
धत्तं सूरिभ्य उत वा स्वश्व्यं नासत्या रयिषाचः स्याम ॥ ९ ॥
तं वां रथं वयमद्या हुवेम स्तोमैरश्विना सुविताय नव्यं ।
अरिष्टनेमिं परि द्यामियानं विद्यामेषं वृजनं जीरदानुं ॥ १० ॥

---

१८१

कदु प्रेष्ठाविषां रयीणामध्वर्यंता यदुन्निनीथो अपां ।
अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानां ॥ १ ॥
आ वामश्वासः शुचयः पयस्पा वातरंहसो दिव्यासो अत्याः ।
मनोजुवो वृषणो वीतपृष्ठा एह स्वराजो अश्विना वहंतु ॥ २ ॥
आ वां रथोऽवनिर्न प्रवत्वान्त्सृप्रवंधुरः सुविताय गम्याः ।
वृष्णः स्थातारा मनसो जवीयानहंपूर्वो यजतो धिष्ण्या यः ॥ ३ ॥
इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः ।
जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ॥ ४ ॥
प्र वां निचेरुः ककुहो वशाँ अनु पिशंगरूपः सदनानि गम्याः ।
हरी अन्यस्य पीपयंत वाजैर्मथ्रा रजांस्यश्विना वि घोषैः ॥ ५ ॥
प्र वां शरद्वान्वृषभो न निष्षाट् पूर्वीरिषश्चरति मध्व इष्णन् ।
एवैरन्यस्य पीपयंत वाजैर्वेषंतीरूर्ध्वा नद्यो न आगुः ॥ ६ ॥

आ। वां। दानाय। ववृतीय। दस्रा। गोः। ओहेन। तौग्र्यः। न। जिव्रिः।
अपः। क्षोणी॰। सचते। माहिना। वां। जूर्णः। वां। अक्षुः। अंहसः। यजत्रा॥ २३॥
नि। यत्। युवेथे॰। निऽयुतः। सुऽदानू॰। उप। स्वधाभिः। सृजथः। पुरंऽधिं।
प्रेषत्। वेषत्। वातः। न। सूरिः। आ। महे। ददे। सुऽव्रतः। न। वाजं॥
वयं। चित्। हि। वां। जरितारः। सत्याः। विपन्यामहे। वि। पणिः। हितऽवान्।
अध। चित्। हि। स्म। अश्विनौ। अनिंद्या। पाथः। हि। स्म। वृषणौ। अंतिऽदेवं॥
युवां। चित्। हि। स्म। अश्विनौ। अनु। द्यून्। विऽरुद्रस्य। प्रऽस्रवणस्य। सातौ।
अगस्त्यः। नरां। नृषु। प्रऽशस्तः। काराधुनीऽइव। चितयत्। सहस्रैः॥
प्र। यत्। वहेथे॰। महिना। रथस्य। प्र। स्यंद्रा। याथः। मनुषः। न। होता।
धत्तं। सूरिऽभ्यः। उत। वा। सुऽअश्व्यं। नासत्या। रयिऽसाचः। स्याम॥
तं। वां। रथं। वयं। अद्य। हुवेम। स्तोमैः। अश्विना। सुविताय। नव्यं।
अरिष्टऽनेमिं। परि। द्यां। इयानं। विद्याम। इषं। वृजनं। जीरऽदानुं॥ २४॥

---

१८१

कत्। ऊं॰। प्रेष्ठौ। इषां। रयीणां। अध्वर्यंता। यत्। उत्ऽनिनीथः। अपां।
अयं। वां। यज्ञः। अकृत। प्रऽशस्तिं। वसुऽधिती॰। अवितारा। जनानां॥
आ। वां। अश्वासः। शुचयः। पयःऽपाः। वातऽरंहसः। दिव्यासः। अत्याः।
मनःऽजुवः। वृषणः। वीतऽपृष्ठाः। आ। इह। स्वऽराजः। अश्विना। वहंतु॥
आ। वां। रथः। अवनिः। न। प्रवत्वान्। सृप्रऽवंधुरः। सुविताय। गम्याः।
वृष्णः। स्थातारा। मनसः। जवीयान्। अहंऽपूर्वः। यजतः। धिष्ण्या। यः॥
इहऽइह। जाता। सं। अवावशीतां। अरेपसा। तन्वा। नामऽभिः। स्वैः।
जिष्णुः। वां। अन्यः। सुऽमखस्य। सूरिः। दिवः। अन्यः। सुऽभगः। पुत्रः। ऊहे॥
प्र। वां। निऽचेरुः। ककुहः। वशान्। अनु। पिशंगऽरूपः। सदनानि। गम्याः।
हरी॰। अन्यस्य। पीपयंत। वाजैः। मथ्रा। रजांसि। अश्विना। वि। घोषैः॥ २५॥
प्र। वां। शरत्ऽवान्। वृषभः। न। निष्षाट्। पूर्वीः। इषः। चरति। मध्वः। इष्णन्।
एवैः। अन्यस्य। पीपयंत। वाजैः। वेषंतीः। ऊर्ध्वाः। नद्यः। नः। आ। अगुः॥

असर्जि वां स्थविरा वेधसा गीर्बाळ्हे अश्विना त्रेधा क्षरंती ।
उपस्तुताववतं नाधमानं यामन्नयामञ्छृणुतं हवं मे ॥ ७ ॥
उत स्या वां रुशतो वप्ससो गीस्त्रिबर्हिषि सदसि पिन्वते नॄन् ।
वृषा वां मेघो वृषणा पीपाय गोर्न सेके मनुषो दशस्यन् ॥ ८ ॥
युवां पूषेवाश्विना पुरंधिरग्निमुषां न जरते हविष्मान् ।
हुवे यद्वां वरिवस्या गृणानो विद्यामेषं वृजनं जीरदानुं ॥ ९ ॥

---

१८२

अभूदिदं वयुनमो षु भूषता रथो वृषण्वान्मदता मनीषिणः ।
धियंजिन्वा धिष्ण्या विश्पलावसू दिवो नपाता सुकृते शुचिव्रता ॥ १ ॥
इंद्रतमा हि धिष्ण्या मरुत्तमा दस्रा दंसिष्ठा रथ्या रथीतमा ।
पूर्णं रथं वहेथे मध्व आचितं तेन दाश्वांसमुप याथो अश्विना ॥ २ ॥
किमत्र दस्रा कृणुथः किमासाथे जनो यः कश्चिदहविर्महीयते ।
अति क्रमिष्टं जुरतं पणेरसुं ज्योतिर्विप्राय कृणुतं वचस्यवे ॥ ३ ॥
जंभयतमभितो रायतः शुनो हतं मृधो विदथुस्तान्यश्विना ।
वाचंवाचं जरितू रत्निनीं कृतमुभा शंसं नासत्यावतं मम ॥ ४ ॥
युवमेतं चक्रथुः सिंधुषु प्लवमात्मन्वंतं पक्षिणं तौग्र्याय कं ।
येन देवत्रा मनसा निरूहथुः सुपप्तनी पेतथुः क्षोदसो महः ॥ ५ ॥
अवविद्धं तौग्र्यमप्स्व१ंतरनारंभणे तमसि प्रविद्धं ।
चतस्रो नावो जठलस्य जुष्टा उदश्विभ्यामिषिताः पारयंति ॥ ६ ॥
कः स्विद्वृक्षो निष्ठितो मध्ये अर्णसो यं तौग्र्यो नाधितः पर्यषस्वजत् ।
पर्णा मृगस्य पतरोरिवारभ उदश्विना ऊहथुः श्रोमताय कं ॥ ७ ॥
तद्वां नरा नासत्यावनु ष्याद्यद्वां मानास उचथमवोचन् ।
अस्मादद्य सदसः सोम्यादा विद्यामेषं वृजनं जीरदानुं ॥ ८ ॥

---

असर्जि । वां । स्थविरा । वेधसा । गीः । बाळ्हे । अश्विना । त्रेधा । क्षरंती ।
उपऽस्तुतौ । अवतं । नाधमानं । यामन् । अयामन् । शृणुतं । हवं । मे ॥
उत । स्या । वां । रुशतः । वप्ससः । गीः । त्रिऽबर्हिषि । सदसि । पिन्वते । नॄन् ।
वृषा । वां । मेघः । वृषणा । पीपाय । गोः । न । सेके । मनुषः । दशस्यन् ॥
युवां । पूषाऽइव । अश्विना । पुरंऽधिः । अग्निं । उषां । न । जरते । हविष्मान् ।
हुवे । यत् । वां । वरिवस्या । गृणानः । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ २६ ॥

---

१८२

अभूत् । इदं । वयुनं । ओ॰ । सु । भूषत । रथः । वृषण्ऽवान् । मदत । मनीषिणः ।
धियंऽजिन्वा । धिष्ण्या । विश्पलावसू॰ । दिवः । नपाता । सुऽकृते । शुचिऽव्रता ॥
इंद्रऽतमा । हि । धिष्ण्या । मरुत्ऽतमा । दस्रा । दंसिष्ठा । रथ्या । रथिऽतमा ।
पूर्णं । रथं । वहेथे॰ । मध्वः । आऽचितं । तेन । दाश्वांसं । उप । याथः । अश्विना ॥
किं । अत्र । दस्रा । कृणुथः । किं । आसाथे॰ । जनः । यः । कः । चित् । अहविः । महीयते ।
अति । क्रमिष्टं । जुरतं । पणेः । असुं । ज्योतिः । विप्राय । कृणुतं । वचस्यवे ॥
जंभयतं । अभितः । रायतः । शुनः । हतं । मृधः । विदथुः । तानि । अश्विना ।
वाचंऽवाचं । जरितुः । रत्निनीं । कृतं । उभा । शंसं । नासत्या । अवतं । मम ॥
युवं । एतं । चक्रथुः । सिंधुषु । प्लवं । आत्मन्ऽवंतं । पक्षिणं । तौग्र्याय । कं ।
येन । देवऽत्रा । मनसा । निःऽऊहथुः । सुऽपप्तनि । पेतथुः । क्षोदसः । महः ॥ २७ ॥
अवऽविद्धं । तौग्र्यं । अप्ऽसु । अंतः । अनारंभणे । तमसि । प्रऽविद्धं ।
चतस्रः । नावः । जठलस्य । जुष्टाः । उत् । अश्विऽभ्यां । इषिताः । पारयंति ॥
कः । स्वित् । वृक्षः । निःऽस्थितः । मध्ये । अर्णसः । यं । तौग्र्यः । नाधितः । परिऽअसस्वजत् ।
पर्णा । मृगस्य । पतरोःऽइव । आऽरभे । उत् । अश्विनौ । ऊहथुः । श्रोमताय । कं ॥
तत् । वां । नरा । नासत्यौ । अनु । स्यात् । यत् । वां । मानासः । उचथं । अवोचन् ।
अस्मात् । अद्य । सदसः । सोम्यात् । आ । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ २८ ॥

---

१८३

तं युंजाथां मनसो यो जवीयान् त्रिवंधुरो वृषणा यस्त्रिचक्रः ।
येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः ॥ १ ॥
सुवृद्रथो वर्तते यन्नभि क्षां यत्तिष्ठथः क्रतुमंतानु पृक्षे ।
वपुर्वपुष्या सचतामियं गीर्दिवो दुहित्रोषसा सचेथे ॥ २ ॥
आ तिष्ठतं सुवृतं यो रथो वामनु व्रतानि वर्तते हविष्मान् ।
येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥ ३ ॥
मा वां वृको मा वृकीरा दधर्षीन्मा परि वर्क्तमुत माति धक्तं ।
अयं वां भागो निहित इयं गीर्दस्राविमे वां निधयो मधूनां ॥ ४ ॥
युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे हविष्मान् ।
दिशं न दिष्टामृजूयेव यंता मे हवं नासत्योप यातं ॥ ५ ॥
अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुं ॥ ६ ॥

---

१८४

ता वामद्य तावपरं हुवेमोच्छंत्यामुषसि वह्निरुक्थैः ।
नासत्या कुह चित्संतावर्यो दिवो नपाता सुदास्तराय ॥ १ ॥
अस्मे ऊ षु वृषणा मादयेथामुत्पणीँर्हतमूर्म्या मदंता ।
श्रुतं मे अच्छोक्तिभिर्मतीनामेष्टा नरा निचेतारा च कर्णैः ॥ २ ॥
श्रिये पूषन्निषुकृतेव देवा नासत्या वहतुं सूर्यायाः ।
वच्यंते वां ककुहा अप्सु जाता युगा जूर्णेव वरुणस्य भूरेः ॥ ३ ॥
अस्मे सा वां माध्वी रातिरस्तु स्तोमं हिनोतं मान्यस्य कारोः ।
अनु यद्वां श्रवस्या सुदानू सुवीर्याय चर्षणयो मदंति ॥ ४ ॥
एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति ।
यातं वर्तिस्तनयाय त्मने चागस्त्ये नासत्या मदंता ॥ ५ ॥
अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुं ॥ ६ ॥

---

१८३

तं। युंजाथां। मनसः। यः। जवीयान्। त्रिऽवंधुरः। वृषणा। यः। त्रिऽचक्रः।
येन। उपऽयाथः। सुऽकृतः। दुरोणं। त्रिऽधातुना। पतथः। विः। न। पर्णैः॥
सुऽवृत्। रथः। वर्तते। यन्। अभि। क्षां। यत्। तिष्ठथः। क्रतुऽमंता। अनु। पृक्षे।
वपुः। वपुष्या। सचतां। इयं। गीः। दिवः। दुहित्रा। उषसा। सचेथे॰॥
आ। तिष्ठतं। सुऽवृतं। यः। रथः। वां। अनु। व्रतानि। वर्तते। हविष्मान्।
येन। नरा। नासत्या। इषयध्यै। वर्तिः। याथः। तनयाय। त्मने। च॥
मा। वां। वृकः। मा। वृकीः। आ। दधर्षीत्। मा। परि। वर्क्तं। उत। मा। अति। धक्तं।
अयं। वां। भागः। निऽहितः। इयं। गीः। दस्रौ। इमे। वां। निऽधयः। मधूनां॥
युवां। गोतमः। पुरुऽमीळ्हः। अत्रिः। दस्रा। हवते। अवसे। हविष्मान्।
दिशं। न। दिष्टां। ऋजुयाऽइव। यंता। आ। मे। हवं। नासत्या। उप। यातं॥
अतारिष्म। तमसः। पारं। अस्य। प्रति। वां। स्तोमः। अश्विनौ। अधायि।
आ। इह। यातं। पथिऽभिः। देवऽयानैः। विद्याम। इषं। वृजनं। जीरऽदानुं॥२९॥४॥

---

१८४

ता। वां। अद्य। तौ। अपरं। हुवेम। उच्छंत्यां। उषसि। वह्निः। उक्थैः।
नासत्या। कुह। चित्। संतौ। अर्यः। दिवः। नपाता। सुदाःऽतराय॥
अस्मे॰। ऊं॰। सु। वृषणा। मादयेथां। उत्। पणीन्। हतं। ऊर्म्या। मदंता।
श्रुतं। मे। अच्छोक्तिऽभिः। मतीनां। एष्टा। नरा। निऽचेतारा। च। कर्णैः॥
श्रिये। पूषन्। इषुकृताऽइव। देवा। नासत्या। वहतुं। सूर्यायाः।
वच्यंते। वां। ककुहाः। अप्ऽसु। जाताः। युगा। जूर्णाऽइव। तरुणस्य। भूरेः॥
अस्मे॰। सा। वां। माध्वी॰। रातिः। अस्तु। स्तोमं। हिनोतं। मान्यस्य। कारोः।
अनु। यत्। वां। श्रवस्या। सुऽदानू॰। सुऽवीर्याय। चर्षणयः। मदंति॥
एषः। वां। स्तोमः। अश्विनौ। अकारि। मानेभिः। मघऽवाना। सुऽवृक्ति।
यातं। वर्तिः। तनयाय। त्मने। च। अगस्त्ये। नासत्या। मदंता॥
अतारिष्म। तमसः। पारं। अस्य। प्रति। वां। स्तोमः। अश्विनौ। अधायि।
आ। इह। यातं। पथिऽभिः। देवऽयानैः। विद्याम। इषं। वृजनं। जीरऽदानुं॥१॥

१८५

कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद ।
विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥ १ ॥
भूरिं द्वे अचरन्ती चरन्तं पद्वन्तं गर्भमपदी दधाते ।
नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ २ ॥
अनेहो दात्रमदितेरनर्वं हुवे स्वर्वदवधं नमस्वत् ।
तद्रोदसी जनयतं जरित्रे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ३ ॥
अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे ।
उभे देवानामुभयेभिरह्नां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ४ ॥
संगच्छमाने युवती समन्ते स्वसारा जामी पित्रोरुपस्थे ।
अभिजिघ्रन्ती भुवनस्य नाभिं द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ५ ॥
उर्वी सद्मनी बृहती ऋतेन हुवे देवानामवसा जनित्री ।
दधाते ये अमृतं सुप्रतीके द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ६ ॥
उर्वी पृथ्वी बहुले दूरेअन्ते उप ब्रुवे नमसा यज्ञे अस्मिन् ।
दधाते ये सुभगे सुप्रतूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ७ ॥
देवान्वा यच्चकृमा कच्चिदागः सखायं वा सदमिज्जास्पतिं वा ।
इयं धीर्भूया अवयानमेषां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ८ ॥
उभा शंसा नर्या मामविष्टामुभे मामूती अवसा सचेताम् ।
भूरि चिदर्यः सुदास्तरायेषा मदन्त इषयेम देवाः ॥ ९ ॥
ऋतं दिवे तदवोचं पृथिव्या अभिश्रावाय प्रथमं सुमेधाः ।
पातामवद्याद्दुरितादभीके पिता माता च रक्षतामवोभिः ॥ १० ॥
इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवे वाम् ।
भूतं देवानामवमे अवोभिर्विद्यामेषं वृजनं जीरदानुम् ॥ ११ ॥

---

१८६

आ न इळाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु ।
अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥ १ ॥

१८५

कतरा। पूर्वा। कतरा। अपरा। अयोः। कथा। जाते॰। कवयः। कः। वि। वेद।
विश्वं। त्मना। बिभृतः। यत्। ह। नाम। वि। वर्तेते॰। अहनी॰। चक्रियाऽइव॥
भूरिं। द्वे॰। अचरंती॰। चरंतं। पत्ऽवंतं। गर्भं। अपदी॰। दधाते॰।
नित्यं। न। सूनुं। पित्रोः। उपऽस्थे। द्यावा। रक्षतं। पृथिवी॰। नः। अभ्वात्॥
अनेहः। दात्रं। अदितेः। अनर्वं। हुवे। स्वःऽवत्। अवधं। नमस्वत्।
तत्। रोदसी॰। जनयतं। जरित्रे। द्यावा। रक्षतं। पृथिवी॰। नः। अभ्वात्॥
अतप्यमाने॰। अवसा। अवंती॰। अनु। स्याम। रोदसी॰। देवऽपुत्रे॰।
उभे॰। देवानां। उभयेभिः। अह्नां। द्यावा। रक्षतं। पृथिवी॰। नः। अभ्वात्॥
संऽगच्छमाने॰। युवती॰। संऽअंते॰। स्वसारा। जामी॰। पित्रोः। उपऽस्थे।
अभिऽजिघ्रंती॰। भुवनस्य। नाभिं। द्यावा। रक्षतं। पृथिवी॰। नः। अभ्वात्॥ २॥
उर्वी॰। सद्मनी॰। बृहती॰। ऋतेन। हुवे। देवानां। अवसा। जनित्री॰।
दधाते॰। ये॰। अमृतं। सुऽप्रतीके॰। द्यावा। रक्षतं। पृथिवी॰। नः। अभ्वात्॥
उर्वी॰। पृथ्वी॰। बहुले॰। दूरेऽअंते॰। उप। ब्रुवे। नमसा। यज्ञे। अस्मिन्।
दधाते॰। ये॰। सुऽभगे॰। सुऽप्रतूर्ती॰। द्यावा। रक्षतं। पृथिवी॰। नः। अभ्वात्॥
देवान्। वा। यत्। चकृम। कत्। चित्। आगः। सखायं। वा। सदं। इत्। जाःऽपतिं। वा।
इयं। धीः। भूयाः। अवऽयानं। एषां। द्यावा। रक्षतं। पृथिवी॰। नः। अभ्वात्॥
उभा। शंसा। नर्या। मां। अविष्टां। उभे॰। मां। ऊती॰। अवसा। सचेतां।
भूरिं। चित्। अर्यः। सुदाःऽतराय। इषा। मदंतः। इषयेम। देवाः॥
ऋतं। दिवे। तत्। अवोचं। पृथिव्यै। अभिऽश्रावाय। प्रथमं। सुऽमेधाः।
पातां। अवद्यात्। दुःऽइतात्। अभीके। पिता। माता। च। रक्षतां। अवःऽभिः॥
इदं। द्यावापृथिवी॰। सत्यं। अस्तु। पितः। मातः। यत्। इह। उपऽब्रुवे। वां।
भूतं। देवानां। अवमे॰। अवःऽभिः। विद्याम। इषं। वृजनं। जीरऽदानुं॥ ३॥

---

१८६

आ। नः। इळाभिः। विदथे। सुऽशस्ति। विश्वानरः। सविता। देवः। एतु।
अपि। यथा। युवानः। मत्सथ। नः। विश्वं। जगत्। अभिऽपित्वे। मनीषा॥

आ नो विश्व आस्क्रा गमंतु देवा मित्रो अर्यमा वरुणः सजोषाः ।
भुवन्यथा नो विश्वे वृधासः करन्त्सुषाहा विथुरं न शवः ॥ २ ॥
प्रेष्ठं वो अतिथिं गृणीषेऽग्निं शस्तिभिस्तुर्वणिः सजोषाः ।
असद्यथा नो वरुणः सुकीर्तिरिषश्च पर्षदरिगूर्तः सूरिः ॥ ३ ॥
उप व एषे नमसा जिगीषोषासानक्ता सुदुघेव धेनुः ।
समाने अहन्विमिमानो अर्कं विषुरूपे पयसि सस्मिन्नूधन् ॥ ४ ॥
उत नोऽहिर्बुध्न्यो३ मयस्कः शिशुं न पिप्युषीव वेति सिंधुः ।
येन नपातमपां जुनाम मनोजुवो वृषणो यं वहंति ॥ ५ ॥
उत न ईं त्वष्टा गंत्वच्छा स्मत्सूरिभिरभिपित्वे सजोषाः ।
आ वृत्रहेंद्रश्चर्षणिप्रास्तुविष्टमो नरां न इह गम्याः ॥ ६ ॥
उत न ईं मतयोऽश्वयोगाः शिशुं न गावस्तरुणं रिहंति ।
तमीं गिरो जनयो न पत्नीः सुरभिष्टमं नरां नसंत ॥ ७ ॥
उत न ईं मरुतो वृद्धसेनाः स्मद्रोदसी समनसः सदंतु ।
पृषदश्वासोऽवनयो न रथा रिशादसो मित्रयुजो न देवाः ॥ ८ ॥
प्र नु यदेषां महिना चिकित्रे प्र युंजते प्रयुजस्ते सुवृक्ति ।
अध यदेषां सुदिने न शरुर्विश्वमेरिणं प्रुषायंत सेनाः ॥ ९ ॥
प्रो अश्विनाववसे कृणुध्वं प्र पूषणं स्वतवसो हि संति ।
अद्वेषो विष्णुर्वात ऋभुक्षा अच्छा सुम्नाय ववृतीय देवान् ॥ १० ॥
इयं सा वो अस्मे दीधितिर्यजत्रा अपिप्राणी च सदनी च भूयाः ।
नि या देवेषु यतते वसूयुर्विद्यामेषं वृजनं जीरदानुं ॥ ११ ॥

---

## १८७

पितुं नु स्तोषं महो धर्माणं तविषीं ।
यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ १ ॥
स्वादो पितो मधो पितो वयं त्वा ववृमहे । अस्माकमविता भव ॥ २ ॥
उप नः पितवा चर शिवः शिवाभिरूतिभिः ।
मयोभुरद्विषेण्यः सखा सुशेवो अद्वयाः ॥ ३ ॥

आ। नः। विश्वे। आस्क्राः। गमंतु। देवाः। मित्रः। अर्यमा। वरुणः। सऽजोषाः।
भुवन्। यथा। नः। विश्वे। वृधासः। करन्। सुऽसहा। विथुरं। न। शवः॥
प्रेष्ठं। वः। अतिथिं। गृणीषे। अग्निं। शस्तिऽभिः। तुर्वणिः। सऽजोषाः।
असत्। यथा। नः। वरुणः। सुऽकीर्तिः। इषः। च। पर्षत्। अरिऽगूर्तः। सूरिः॥
उप। वः। आ। ईषे। नमसा। जिगीषा। उषसानक्ता। सुदुघाऽइव। धेनुः।
समाने। अहन्। विऽमिमानः। अर्कं। विषुऽरूपे। पयसि। सस्मिन्। ऊधन्॥
उत। नः। अहिः। बुध्न्यः। मयः। कः॰। शिशुं। न। पिप्युषीऽइव। वेति। सिंधुः।
येन। नपातं। अपां। जुनाम। मनःऽजुवः। वृषणः। यं। वहंति ॥ ४ ॥
उत। नः। ईं। त्वष्टा। आ। गंतु। अच्छ। स्मत्। सूरिऽभिः। अभिऽपित्वे। सऽजोषाः।
आ। वृत्रऽहा। इंद्रः। चर्षणिऽप्राः। तुविःऽतमः। नरां। नः। इह। गम्याः॥
उत। नः। ईं। मतयः। अश्वऽयोगाः। शिशुं। न। गावः। तरुणं। रिहंति।
तं। ईं। गिरः। जनयः। न। पत्नीः। सुरभिःऽतमं। नरां। नसंत॥
उत। नः। ईं। मरुतः। वृद्धऽसेनाः। स्मत्। रोदसी॰। सऽमनसः। सदंतु।
पृषत्ऽअश्वासः। अवनयः। न। रथाः। रिशादसः। मित्रऽयुजः। न। देवाः॥
प्र। नु। यत्। एषां। महिना। चिकित्रे। प्र। युंजते। प्रऽयुजः। ते। सुऽवृक्ति।
अध। यत्। एषां। सुऽदिने। न। शरुः। विश्वं। आ। इरिणं। प्रुषायंत। सेनाः॥
प्रो॰। अश्विनौ। अवसे। कृणुध्वं। प्र। पूषणं। स्वऽतवसः। हि। संति।
अद्वेषः। विष्णुः। वातः। ऋभुक्षाः। अच्छ। सुम्नाय। ववृतीय। देवान्॥
इयं। सा। वः। अस्मे॰। दीधितिः। यजत्राः। अपिऽप्राणी। च। सदनी। च। भूयाः।
नि। या। देवेषु। यतते। वसुऽयुः। विद्याम। इषं। वृजनं। जीरऽदानुं॥ ५॥

---

१८७

पितुं। नु। स्तोषं। महः। धर्माणं। तविषीं।
यस्य। त्रितः। वि। ओजसा। वृत्रं। विऽपर्वं। अर्दयत्॥
स्वादो॰। पितो॰। मधो॰। पितो॰। वयं। त्वा। ववृमहे। अस्माकं। अविता। भव॥
उप। नः। पितो॰। आ। चर। शिवः। शिवाभिः। ऊतिऽभिः।
मयःऽभुः। अद्विषेण्यः। सखा। सुऽशेवः। अद्वयाः॥

तव त्ये पितो रसा रजांस्यनु विष्ठिताः । दिवि वाता इव श्रिताः ॥ ४ ॥
तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो ।
प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते ॥ ५ ॥
त्वे पितो महानां देवानां मनो हितं ।
अकारि चारु केतुना तवाहिमवसावधीत् ॥ ६ ॥
यददो पितो अजगन्विवस्व पर्वतानां ।
अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः ॥ ७ ॥
यदपामोषधीनां परिंशमारिशामहे । वातापे पीव इद्भव ॥ ८ ॥
यत्ते सोम गवाशिरो यवाशिरो भजामहे । वातापे पीव इद्भव ॥ ९ ॥
करंभ ओषधे भव पीवो वृक्क उदारथिः । वातापे पीव इद्भव ॥ १० ॥
तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम ।
देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादं ॥ ११ ॥

---

## १८८

समिद्धो अद्य राजसि देवो देवैः सहस्रजित् । दूतो हव्या कविर्वह ॥ १ ॥
तनूनपादृतं यते मध्वा यज्ञः समज्यते । दधत्सहस्रिणीरिषः ॥ २ ॥
आजुह्वानो न ईड्यो देवाँ आ वक्षि यज्ञियान् । अग्ने सहस्रसा असि ॥ ३ ॥
प्राचीनं बर्हिरोजसा सहस्रवीरमस्तृणन् । यत्रादित्या विराजथ ॥ ४ ॥
विराट् सम्राड्विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः । दुरो घृतान्यक्षरन् ॥ ५ ॥
सुरुक्मे हि सुपेशसाधि श्रिया विराजतः । उषासावेह सीदतां ॥ ६ ॥
प्रथमा हि सुवाचसा होतारा दैव्या कवी । यज्ञं नो यक्षतामिमं ॥ ७ ॥
भारतीळे सरस्वति या वः सर्वा उपब्रुवे । ता नश्चोदयत श्रिये ॥ ८ ॥
त्वष्टा रूपाणि हि प्रभुः पशून्विश्वान्समानजे । तेषां नः स्फातिमा यज ॥ ९ ॥
उप त्मन्या वनस्पते पाथो देवेभ्यः सृज । अग्निर्हव्यानि सिष्वदत् ॥ १० ॥
पुरोगा अग्निर्देवानां गायत्रेण समज्यते । स्वाहाकृतीषु रोचते ॥ ११ ॥

---

तव॑। त्ये। पि॒तो॒ इति॑। रसाः॑। रजां॑सि। अनु॑। विऽस्थि॑ताः। दि॒वि। वाताः॑ऽइव। श्रि॒ताः॥
तव॑। त्ये। पि॒तो॒ इति॑। दद॑तः। तव॑। स्वादि॑ष्ठ। ते। पि॒तो॒ इति॑।
प्र। स्वा॒द्मानः॑। रसा॑नां। तु॒वि॒ग्रीवाः॑ऽइव। ई॒र॒ते॒ ॥ ६ ॥
त्वे इति॑। पि॒तो॒ इति॑। म॒हानां॑। दे॒वानां॑। मनः॑। हि॒तं।
अका॑रि। चारु॑। के॒तुना॑। तव॑। अहिं॑। अव॑सा। अ॒व॒धी॒त् ॥
यत्। अ॒दः। पि॒तो॒ इति॑। अज॑गन्। वि॒वस्व॑। पर्व॑तानां।
अत्र॑। चि॒त्। नः॒। म॒धो॒ इति॑। पि॒तो॒ इति॑। अरं॑। भ॒क्षाय॑। ग॒म्याः॒ ॥
यत्। अ॒पां। ओष॑धीनां। प॒रिं॒शं। आ॒ऽरि॒शाम॑हे। वाता॑पे। पीवः॑। इत्। भ॒व॒ ॥
यत्। ते॒। सो॒म॒। गोऽआ॑शिरः। यव॑ऽआशिरः। भजा॑महे। वाता॑पे। पीवः॑। इ॒त्। भ॒व॒॥
क॒र॒म्भः। ओ॒ष॒धे॒। भ॒व॒। पीवः॑। वृ॒क्कः। उ॒दा॒र॒थिः। वाता॑पे। पीवः॑। इ॒त्। भ॒व॒ ॥
तं। त्वा॒। व॒यं। पि॒तो॒ इति॑। वचः॑ऽभिः। गावः॑। न। ह॒व्या। सु॒सू॒दि॒म॒।
दे॒वेभ्यः॑। त्वा॒। स॒ध॒ऽमादं॑। अ॒स्मभ्यं॑। त्वा॒। स॒ध॒ऽमादं॑ ॥ ७ ॥

---

१८८

संऽइ॑द्धः। अ॒द्य। रा॒ज॒सि॒। दे॒वः। दे॒वैः। स॒ह॒स्र॒ऽजि॒त्। दू॒तः। ह॒व्या। क॒विः। व॒ह॒ ॥
तनू॑ऽनपात्। ऋ॒तं। य॒ते। मध्वा॑। य॒ज्ञः। सं। अ॒ज्य॒ते॒। दध॑त्। स॒ह॒स्रिणीः॑। इषः॑ ॥
आ॒ऽजुह्वा॑नः। नः॒। ईड्यः॑। दे॒वान्। आ। व॒क्षि॒। य॒ज्ञिया॑न्। अग्ने॑। स॒ह॒स्र॒ऽसाः। अ॒सि॒॥
प्रा॒चीनं॑। ब॒र्हिः। ओज॑सा। स॒ह॒स्र॑ऽवीरं। अ॒स्तृ॒ण॒न्। यत्र॑। आ॒दि॒त्याः। वि॒ऽराज॑थ ॥
वि॒ऽराट्। सं॒ऽराट्। वि॒ऽभ्वीः। प्र॒ऽभ्वीः। ब॒ह्वीः। च॒। भूय॑सीः। च॒। याः। दुरः॑। घृ॒तानि॑। अ॒क्ष॒र॒न् ॥ ८ ॥
सु॒ऽरु॒क्मे इति॑। हि। सु॒ऽपेश॑सा। अधि॑। श्रि॒या। वि॒ऽराज॑तः। उ॒षसौ॑। आ। इ॒ह। सी॒द॒तां॒॥
प्र॒थ॒मा। हि। सु॒ऽवाच॑सा। होता॑रा। दैव्या॑। क॒वी इति॑। य॒ज्ञं। नः॒। य॒क्ष॒तां॒। इ॒मं ॥
भार॑ति। इळे॑। सर॑स्वति। याः। वः॒। सर्वाः॑। उ॒प॒ऽब्रु॒वे। ताः। नः॒। चो॒द॒य॒त॒। श्रि॒ये ॥
त्वष्टा॑। रू॒पाणि॑। हि। प्र॒ऽभुः। प॒शून्। विश्वा॑न्। सं॒ऽआ॒न॒जे। तेषां॑। नः॒। स्फा॒तिं। आ। य॒ज॒॥
उप॑। त्मन्या॑। व॒न॒स्प॒ते॒। पाथः॑। दे॒वेभ्यः॑। सृ॒ज॒। अ॒ग्निः। ह॒व्यानि॑। सि॒स्व॒द॒त् ॥
पु॒रः॒ऽगाः। अ॒ग्निः। दे॒वानां॑। गा॒य॒त्रेण॑। सं। अ॒ज्य॒ते॒। स्वाहा॑ऽकृतीषु। रो॒च॒ते॒ ॥ ९ ॥

---

१८९

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्य१स्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥
अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ २ ॥
अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमंत कृष्टीः ।
पुनरस्मभ्यं सुविताय देव क्षां विश्वेभिरमृतेभिर्यजत्र ॥ ३ ॥
पाहि नो अग्ने पायुभिरजस्रैरुत प्रिये सदन आ शुशुक्वान् ।
मा ते भयं जरितारं यविष्ठ नूनं विदन्मापरं सहस्वः ॥ ४ ॥
मा नो अग्नेऽव सृजो अघायाविष्यवे रिपवे दुच्छुनायै ।
मा दत्वते दशते मादते नो मा रीषते सहसावन्परा दाः ॥ ५ ॥
वि घ त्वावाँ ऋतजात यंसद्गृणानो अग्ने तन्वे३ वरूथं ।
विश्वाद्रिरिक्षोरुत वा निनित्सोरभिहुतामसि हि देव विष्पट् ॥ ६ ॥
त्वं ताँ अग्न उभयान्वि विद्वान्वेषि प्रपित्वे मनुषो यजत्र ।
अभिपित्वे मनवे शास्यो भूर्मर्मृजेन्य उशिग्भिर्नाक्रः ॥ ७ ॥
अवोचाम निवचनान्यस्मिन्मानस्य सूनुः सहसाने अग्नौ ।
वयं सहस्रमृषिभिः सनेम विद्यामेषं वृजनं जीरदानुं ॥ ८ ॥

---

१९०

अनर्वाणं वृषभं मंद्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ।
गाथान्यः सुरुचो यस्य देवा आशृण्वंति नवमानस्य मर्ताः ॥ १ ॥
तमृत्विया उप वाचः सचंते सर्गो न यो देवयतामसर्जि ।
बृहस्पतिः स ह्यंजो वरांसि विभ्वाभवत्समृते मातरिश्वा ॥ २ ॥
उपस्तुतिं नमस उद्यतिं च श्लोकं यंसत्सवितेव प्र बाहू ।
अस्य क्रत्वाहन्यो३ यो अस्ति मृगो न भीमो अरक्षसस्तुविष्मान् ॥ ३ ॥
अस्य श्लोको दिवीयते पृथिव्यामत्यो न यंसद्यक्षभृद्विचेताः ।
मृगाणां न हेतयो यंति चेमा बृहस्पतेरहिमायाँ अभि द्यून् ॥ ४ ॥

१८९

अग्ने। नय। सुऽपथा। राये। अस्मान्। विश्वानि। देव। वयुनानि। विद्वान्।
युयोधि। अस्मत्। जुहुराणं। एनः। भूयिष्ठां। ते। नमःऽउक्तिं। विधेम ॥
अग्ने। त्वं। पारय। नव्यः। अस्मान्। स्वस्तिऽभिः। अति। दुःऽगानि। विश्वा।
पूः। च। पृथ्वी। बहुला। नः। उर्वी। भव। तोकाय। तनयाय। शं। योः ॥
अग्ने। त्वं। अस्मत्। युयोधि। अमीवाः। अनग्निऽत्राः। अभिऽअमंत। कृष्टीः।
पुनः। अस्मभ्यं। सुविताय। देव। क्षां। विश्वेभिः। अमृतेभिः। यजत्र ॥
पाहि। नः। अग्ने। पायुऽभिः। अजस्रैः। उत। प्रिये। सदने। आ। शुशुक्वान्।
मा। ते। भयं। जरितारं। यविष्ठ। नूनं। विदत्। मा। अपरं। सहस्वः ॥
मा। नः। अग्ने। अव। सृजः। अघाय। अविष्यवे। रिपवे। दुच्छुनायै।
मा। दत्वते। दशते। मा। अदते। नः। मा। रिषते। सहसाऽवन्। परा। दाः ॥ १० ॥
वि। घ। त्वाऽवान्। ऋतऽजात। यंसत्। गृणानः। अग्ने। तन्वे। वरूथं।
विश्वात्। रिरिक्षोः। उत। वा। निनित्सोः। अभिऽहुतां। असि। हि। देव। विष्पट् ॥
त्वं। तान्। अग्ने। उभयान्। वि। विद्वान्। वेषि। प्रऽपित्वे। मनुषः। यजत्र।
अभिऽपित्वे। मनवे। शास्यः। भूः। मर्मृजेन्यः। उशिक्ऽभिः। न। अक्रः ॥
अवोचाम। निऽवचनानि। अस्मिन्। मानस्य। सूनुः। सहसाने। अग्नौ।
वयं। सहस्रं। ऋषिऽभिः। सनेम। विद्याम। इषं। वृजनं। जीरऽदानुं ॥ ११ ॥

---

१९०

अनर्वाणं। वृषभं। मंद्रऽजिह्वं। बृहस्पतिं। वर्धय। नव्यं। अर्कैः।
गाथान्यः। सुऽरुचः। यस्य। देवाः। आऽशृण्वंति। नवमानस्य। मर्ताः ॥
तं। ऋत्वियाः। उप। वाचः। सचंते। सर्गः। न। यः। देवऽयतां। असर्जि।
बृहस्पतिः। सः। हि। अंजः। वरांसि। विऽभ्वा। अभवत्। सं। ऋते। मातरिश्वा ॥
उपऽस्तुतिं। नमसः। उत्ऽयतिं। च। श्लोकं। यंसत्। सविताऽइव। प्र। बाहू इति ।
अस्य। क्रत्वा। अहन्यः। यः। अस्ति। मृगः। न। भीमः। अरक्षसः। तुविष्मान् ॥
अस्य। श्लोकः। दिवि। ईयते। पृथिव्यां। अत्यः। न। यंसत्। यक्षऽभृत्। विऽचेताः।
मृगाणां। न। हेतयः। यंति। च। इमाः। बृहस्पतेः। अहिऽमायान्। अभि। द्यून् ॥

ये त्वा देवोस्रिकं मन्यमानाः पापा भद्रमुपजीवंति पज्राः ।
न दूढ्ये३ अनु ददासि वामं बृहस्पते चयस इत्पियारुं ॥ ५ ॥
सुप्रैतुः सूयवसो न पंथा दुर्नियंतुः परिप्रीतो न मित्रः ।
अनर्वाणो अभि ये चक्षते नोऽपीवृता अपोर्णुवंतो अस्थुः ॥ ६ ॥
सं यं स्तुभोऽवनयो न यंति समुद्रं न स्रवतो रोधचक्राः ।
स विद्वाँ उभयं चष्टे अंतर्बृहस्पतिस्तर आपश्च गृध्रः ॥ ७ ॥
एवा महस्तुविजातस्तुविष्मान्बृहस्पतिर्वृषभो धायि देवः ।
स नः स्तुतो वीरवद्धातु गोमद्विद्यामेषं वृजनं जीरदानुं ॥ ८ ॥

---

१९१

कंकतो न कंकतोऽथो सतीनकंकतः ।
द्वाविति प्लुषी इति न्य१दृष्टा अलिप्सत ॥ १ ॥
अदृष्टान्हंत्यायत्यथो हंति परायती ।
अथो अवघ्नती हंत्यथो पिनष्टि पिंषती ॥ २ ॥
शरासः कुशरासो दर्भासः सैर्या उत ।
मौंजा अदृष्टा वैरिणाः सर्वे साकं न्यलिप्सत ॥ ३ ॥
नि गावो गोष्ठे असदन्नि मृगासो अविक्षत ।
नि केतवो जनानां न्य१दृष्टा अलिप्सत ॥ ४ ॥
एत उ त्ये प्रत्यदृश्रन्प्रदोषं तस्करा इव ।
अदृष्टा विश्वदृष्टाः प्रतिबुद्धा अभूतन ॥ ५ ॥
द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा ।
अदृष्टा विश्वदृष्टास्तिष्ठतेळयता सु कं ॥ ६ ॥
ये अंस्या ये अंग्याः सूचीका ये प्रकंकताः ।
अदृष्टाः किं चनेह वः सर्वे साकं नि जस्यत ॥ ७ ॥
उत्पुरस्तात्सूर्य एति विश्वदृष्टो अदृष्टहा ।
अदृष्टान्त्सर्वाञ्जंभयन्त्सर्वाश्च यातुधान्यः ॥ ८ ॥

ये। त्वा। देव। उस्रिकं। मन्यमानाः। पापाः। भद्रं। उपऽजीवंति। पज्राः।
न। दुःऽध्ये। अनु। ददासि। वामं। बृहस्पते। चयसे। इत्। पियारुं ॥ १२ ॥
सुऽप्रैतुः। सुऽयवसः। न। पंथाः। दुःऽनियंतुः। परिऽप्रीतः। न। मित्रः।
अनर्वाणः। अभि। ये। चक्षते। नः। अपिऽवृताः। अपऽऊर्णुवंतः। अस्थुः ॥
सं। यं। स्तुभः। अवनयः। न। यंति। समुद्रं। न। स्रवतः। रोधऽचक्राः।
सः। विद्वान्। उभयं। चष्टे। अंतः। बृहस्पतिः। तरः। आपः। च। गृध्रः ॥
एव। महः। तुविऽजातः। तुविष्मान्। बृहस्पतिः। वृषभः। धायि। देवः।
सः। नः। स्तुतः। वीरऽवत्। धातु। गोऽमत्। विद्याम। इषं। वृजनं। जीरऽदानुं ॥ १३ ॥

---

१९१

कंकतः। न। कंकतः। अथो॰। सतीनऽकंकतः।
द्वौ। इति। प्लुषी॰। इति। नि। अदृष्टाः। अलिप्सत ॥
अदृष्टान्। हंति। आऽयती। अथो॰। हंति। पराऽयती।
अथो॰। अवऽघ्नती। हंति। अथो॰। पिनष्टि। पिंषती ॥
शरासः। कुशरासः। दर्भासः। सैर्याः। उत।
मौंजाः। अदृष्टाः। वैरिणाः। सर्वे। साकं। नि। अलिप्सत ॥
नि। गावः। गोऽस्थे। असदन्। नि। मृगासः। अविक्षत।
नि। केतवः। जनानां। नि। अदृष्टाः। अलिप्सत ॥
एते। ऊं॰। त्ये। प्रति। अदृश्रन्। प्रऽदोषं। तस्कराःऽइव।
अदृष्टाः। विश्वऽदृष्टाः। प्रतिऽबुद्धाः। अभूतन ॥ १४ ॥
द्यौः। वः। पिता। पृथिवी। माता। सोमः। भ्राता। अदितिः। स्वसा।
अदृष्टाः। विश्वऽदृष्टाः। तिष्ठत। इळयत। सु। कं ॥
ये। अंस्याः। ये। अंग्याः। सूचीकाः। ये। प्रऽकंकताः।
अदृष्टाः। किं। चन। इह। वः। सर्वे। साकं। नि। जस्यत ॥
उत्। पुरस्तात्। सूर्यः। एति। विश्वऽदृष्टः। अदृष्टऽहा।
अदृष्टान्। सर्वान्। जंभयन्। सर्वाः। च। यातुऽधान्यः ॥

उदपप्तदसौ सूर्यः पुरु विश्वानि जूर्वन् ।
आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा ॥ ९ ॥
सूर्ये विषमा सजामि दृतिं सुरावतो गृहे ।
सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ १० ॥
इयत्तिका शकुन्तिका सका जघास ते विषं ।
सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ ११ ॥
त्रिः सप्त विष्पुलिंगका विषस्य पुष्यमक्षन् ।
ताश्चिन्नु न मरंति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ १२ ॥
नवानां नवतीनां विषस्य रोपुषीणां ।
सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ १३ ॥
त्रिः सप्त मयूर्यः सप्त स्वसारो अग्रुवः ।
तास्ते विषं वि जभ्रिर उदकं कुंभिनीरिव ॥ १४ ॥
इयत्तकः कुषुंभकस्तकं भिनद्म्यश्मना ।
ततो विषं प्र वावृते पराचीरनु संवतः ॥ १५ ॥
कुषुंभकस्तदब्रवीद्गिरेः प्रवर्तमानकः ।
वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषं ॥ १६ ॥ २४ ॥ १ ॥

इति
प्रथमं मंडलं
समाप्तं

उत्। अपप्तत्। असौ। सूर्यः। पुरु। विश्वानि। जूर्वन्।
आदित्यः। पर्वतेभ्यः। विश्वऽदृष्टः। अदृष्टऽहा ॥
सूर्ये। विषं। आ। सजामि। दृतिं। सुराऽवतः। गृहे ॥ सः। चित्। नु। न। मराति। नो०।
वयं। मराम। आरे। अस्य। योजनं। हरिऽस्थाः। मधु। त्वा। मधुला। चकार ॥ १५ ॥
इयत्तिका। शकुंतिका। सका। जघास। ते। विषं ॥ सो०। चित्। नु। न। मराति। नो०।
वयं। मराम। आरे। अस्य। योजनं। हरिऽस्थाः। मधु। त्वा। मधुला। चकार ॥
त्रिः। सप्त। विष्पुलिंगकाः। विषस्य। पुष्यं। अक्षन् ॥ ताः। चित्। नु। न। मरंति। नो०।
वयं। मराम। आरे। अस्य। योजनं। हरिऽस्थाः। मधु। त्वा। मधुला। चकार ॥
नवानां। नवतीनां। विषस्य। रोपुषीणां।
सर्वासां। अग्रभं। नाम। आरे। अस्य। योजनं। हरिऽस्थाः। मधु। त्वा। मधुला। चकार ॥
त्रिः। सप्त। मयूर्यः। सप्त। स्वसारः। अग्रुवः।
ताः। ते। विषं। वि। जभ्रिरे। उदकं। कुंभिनीःऽइव ॥
इयत्तकः। कुषुंभकः। तकं। भिनद्मि। अश्मना।
ततः। विषं। प्र। ववृते। पराचीः। अनु। संऽवतः ॥
कुषुंभकः। तत्। अब्रवीत्। गिरेः। प्रऽवर्तमानकः।
वृश्चिकस्य। अरसं। विषं। अरसं। वृश्चिक। ते। विषं ॥ १६ ॥

इति
द्वितीयाष्टकस्य पंचमाध्याये षोडशो वर्गः
समाप्तः

# SARVÂNUKRAMA.

## I. MANDALA.

| Hymne. | Mandala Anuvâka Sûkta. | Ashtaka Adhyâya Varga. | Dichter. | Gottheit. | Versmaass. |
|---|---|---|---|---|---|
| 1 | 1. 1. 1 | 1. 1. 1 | Madhukkhandâh aus d. Geschlecht des Visvâmitrah. | Agnih. | Gâyatrî. |
| 2 | 1. 1. 2 | 1. 1. 3 | » » | 1–3 Vâyuh, 4–6 Indra-Vâyû, 7–9 Mitrâ-Varunau. | » » |
| 3 | 1. 1. 3 | 1. 1. 5 | » » | 1–3 Asvinau, 4–6 Indrah, 7–9 Visve devâh, 10–12 Sarasvatî. | » » |
| 4 | 1. 2. 1 | 1. 1. 7 | » » | Indrah. | » » |
| 5 | 1. 2. 2 | 1. 1. 9 | » » | » » | » » |
| 6 | 1. 2. 3 | 1. 1. 11 | » » | Indrah, 4–9 Marutah, 5 und 7 Indrah und Marutah. | » » |
| 7 | 1. 2. 4 | 1. 1. 13 | » » | Indrah. | » » |
| 8 | 1. 3. 1 | 1. 1. 15 | » » | » » | » » |
| 9 | 1. 3. 2 | 1. 1. 17 | » » | » » | » » |
| 10 | 1. 3. 3 | 1. 1. 19 | » » | » » | Anushtup. |
| 11 | 1. 3. 4 | 1. 1. 21 | Getâ, Sohn d. Madhukkhandâh. | » » | » » |
| 12 | 1. 4. 1 | 1. 1. 22 | Medhâtithih aus dem Geschlechte des Kanvah. | Agnih, 6 Agnir Nirmathyah und Agnir Âhavanîyah. | Gâyatrî. |
| 13 | 1. 4. 2 | 1. 1. 24 | » » | 1 Idhmah oder Samiddhah, 2 Tanûnapât, 3 Narâsansah, 4 Ilah, 5 Barhih, 6 Devîr Dvârah, 7 Ushâsâ-Naktâ, 8 Daivyâ Hotârau Praketasau, 9 Tisro Devyah (Sarasvatî, Ilâ, Bhâratî), 10 Tvashtâ, 11 Vanaspatih, 12 Svâhâkritayah, (Âpram sûktam.) | » » |
| 14 | 1. 4. 3 | 1. 1. 26 | » » | Visve devâh. | » » |
| 15 | 1. 4. 4 | 1. 1. 28 | » » | Ritavah, 1 Indrah, 2 Marutah, 3 Tvashtâ, 4 Agnih, 5 Indrah, 6 Mitrâ-Varunau, 7–10 Dravinodâh, 11 Asvinau, 12 Agnih. | » » |

| Hymne. | Ma*nd*ala Anuvâka Sûkta. | Ash*t*aka Adhyâya Varga. | Dichter. | Gottheit. | Versmaass. |
|---|---|---|---|---|---|
| 16 | 1. 4. 5 | 1. 1. 30 | Medhâtithi*h*. | Indra*h*. | Gâyatrî. |
| 17 | 1. 4. 6 | 1. 1. 32 | » » | Indrâ-Varu*n*au. | Gâyatrî, 4 u. 5 Pâdanik*r*it. |
| 18 | 1. 5. 1 | 1. 1. 34 | » » | 1–5 Brahma*n*aspati*h*, mit Indra*h* und Soma*h* in 4, und mit Dakshi*n*â in 5, 6–9 Sadasaspati*h*, (9 Sadasaspati*h* oder Narâ*sans*a*h*.) | Gâyatrî. |
| 19 | 1. 5. 2 | 1.1.36–37 | » » | Agni*h* und Maruta*h*. | » » |
| 20 | 1. 5. 3 | 1. 2. 1 | » » | *R*ibhava*h*. | » » |
| 21 | 1. 5. 4 | 1. 2. 3 | » » | Indra-Agnî. | » » |
| 22 | 1. 5. 5 | 1. 2. 4 | » » | 1–4 A*s*vinau, 5–8 Savitâ, 9–10 Agni*h*, 11 Devya*h*, 12 Indrâ*n*î, Varu*n*â*n*î, und Agnâyî, 13–14 Dyâvâ-P*r*ithivyau, 15 P*r*ithivî, 16–21 Vish*n*u*h* (16 Vish*n*u*h* od. Deva*h*). | » » |
| 23 | 1. 5. 6 | 1. 2. 8 | » » | 1 Vâyu*h*, 2–3 Indra-Vâyû, 4–6 Mitrâ-Varu*n*au, 7–9 Indro Marutvân, 10–12 Vi*s*ve devâ*h*, 13–15 Pûshâ, 16–$23^a$ Âpa*h*, $23^b$–24 Agni*h*. | Gâyatrî, 19 Pura-ush*n*ik, 20 Anush*t*up, 21 Pratish*th*â, 22–24 Anush*t*up. |
| 24 | 1. 6. 1 | 1. 2. 13 | *S*una*hs*epha*h*, Sohn des A*g*igarta*h* adoptirt von Vi*s*vâmitra*h* unter dem Namen Devarâta*h*. | Varu*n*a*h*, 1 Pra*g*âpati*h*, 2 Agni*h*, 3–5 Savitâ oder Bhaga*h* (v. 5). | Trish*t*up, 3–5 Gâyatrî. |
| 25 | 1. 6. 2 | 1. 2. 16 | » » | Varu*n*a*h*. | Gâyatrî. |
| 26 | 1. 6. 3 | 1. 2. 20 | » » | Agni*h*. | » » |
| 27 | 1. 6. 4 | 1. 2. 22 | » » | Agni*h*, 1–3 Vi*s*ve devâ*h*. | Gâyatrî, 13 Trish*t*up. |
| 28 | 1. 6. 5 | 1. 2. 25 | » » | 1–4 Indra*h*, 5–6 Ulûkhalam, 7–8 Ulûkhala-Musalau, 9 Hari*sk*andra*h*, Adhishava*n*a*k*arma, od. Soma*h*. | 1–6 Anush*t*up, 7–9 Gâyatrî. |
| 29 | 1. 6. 6 | 1. 2. 27 | » » | Indra*h*. | Pa*n*kti*h*. |
| 30 | 1. 6. 7 | 1. 2. 28 | » » | 1–16 Indra*h*, 17–19 A*s*vinau, 20–22 Ushâ*h*. | Gâyatrî, 11 Pâdanik*r*id Gâyatrî, 16 Trish*t*up. |
| 31 | 1. 7. 1 | 1. 2. 32 | Hira*n*yastûpa*h*, aus d. Geschlechte des Angirâ*h*. | Agni*h*. | *G*agatî, 8, 16 und 18 Trish*t*up. |
| 32 | 1. 7. 2 | 1.2.36–38 | » » | Indra*h*. | Trish*t*up. |
| 33 | 1. 7. 3 | 1. 3. 1 | » » | » » | » » |
| 34 | 1. 7. 4 | 1. 3. 4 | » » | A*s*vinau. | *G*agatî, 9 u. 12 Trish*t*up. |
| 35 | 1. 7. 5 | 1. 3. 6 | » » | Savitâ, 1 Agni*h*, Mitrâ-Varu*n*au, Râtrî, und Savitâ. | Trish*t*up, 1 und 9 *G*agatî. |
| 36 | 1. 8. 1 | 1. 3. 8 | Ka*n*va*h*, Sohn des Ghora*h*. | Agni*h*, 13–14 Yûpa*h*. | Prâgâtham bârhatam, die ungleichen Verse sind B*r*ihatî, die gleichen Satob*r*ihatî. |
| 37 | 1. 8. 2 | 1. 3. 12 | » » | Maruta*h*. | Gâyatrî. |
| 38 | 1. 8. 3 | 1. 3. 15 | » » | » » | » » |

| Hymne. | Ma*n*d*ala Anuvâka Sûkta. | Ash*t*aka Adhyâya Varga. | Dichter. | Gottheit. | Versmaass. |
|---|---|---|---|---|---|
| 39 | 1. 8. 4 | 1. 3. 18 | Ka*n*va*h*. | Maruta*h*. | Prâg. bârh. |
| 40 | 1. 8. 5 | 1. 3. 20 | » » | Brahma*n*aspati*h*. | » » |
| 41 | 1. 8. 6 | 1. 3. 22 | » » | 1–3 und 7–9 Varu*n*a-Mitra-Aryama*n*a*h*, 4–6 Âdityâ*h*. | Gâyatrî. |
| 42 | 1. 8. 7 | 1. 3. 24 | » » | Pûshâ. | » » |
| 43 | 1. 8. 8 | 1. 3. 26 | » » | Rudra*h*, 3 Mitrâ-Varu*n*au, 7–9 Soma*h*. | Gâyatrî, 9 Anush*t*up. |
| 44 | 1. 9. 1 | 1. 3. 28 | Praska*n*va*h*, Sohn des Ka*n*va*h*. | Agni*h*, 1 und 2 mit A*s*vinau und Ushâ*h*. | Prâg. bârh. |
| 45 | 1. 9. 2 | 1. 3. 31 | » » | Agni*h*, Hälfte v. 10 Devâ*h*. | Anush*t*up. |
| 46 | 1. 9. 3 | 1.3.33–35 | » » | A*s*vinau. | Gâyatrî. |
| 47 | 1. 9. 4 | 1. 4. 1 | » » | » » | Prâgâtham. |
| 48 | 1. 9. 5 | 1. 4. 3 | » » | Ushâ*h*. | » » |
| 49 | 1. 9. 6 | 1. 4. 6 | » » | » » | Anush*t*up. |
| 50 | 1. 9. 7 | 1. 4. 7 | » » | Sûrya*h*. | 1–9 Gâyatrî, 10–13 Anush*t*up. |
| 51 | 1. 10. 1 | 1. 4. 9 | Savya*h* (Indra*h*), Sohn des Angirâ*h*. | Indra*h*. | 1–13 *G*agatî, 14–15 Trish*t*up. |
| 52 | 1. 10. 2 | 1. 4. 12 | » » | » » | 1–12 und 14 *G*agatî, 13 und 15 Trish*t*up. |
| 53 | 1. 10. 3 | 1. 4. 15 | » » | » » | 1–9 *G*agatî, 10 u. 11 Trish*t*up. |
| 54 | 1. 10. 4 | 1. 4. 17 | » » | » » | 1–5, 7 und 10 *G*ag., 6, 8, 9 und 11 Trish*t*up. |
| 55 | 1. 10. 5 | 1. 4. 19 | » » | » » | *G*agatî. |
| 56 | 1. 10. 6 | 1. 4. 21 | » » | » » | » » |
| 57 | 1. 10. 7 | 1. 4. 22 | » » | » » | » » |
| 58 | 1. 11. 1 | 1. 4. 23 | Nodhâ*h*, aus dem Geschlechte des Gotama*h*. | Agni*h*. | 1–5 *G*agatî, 6–9 Trish*t*up. |
| 59 | 1. 11. 2 | 1. 4. 25 | » » | Agnir Vai*s*vânara*h*. | Trish*t*up. |
| 60 | 1. 11. 3 | 1. 4. 26 | » » | Agni*h*. | » » |
| 61 | 1. 11. 4 | 1.4.27–29 | » » | Indra*h*. | » » |
| 62 | 1. 11. 5 | 1. 5. 1 | » » | » » | » » |
| 63 | 1. 11. 6 | 1. 5. 4 | » » | » » | » » |
| 64 | 1. 11. 7 | 1. 5. 6 | » » | Maruta*h*. | 1–14 *G*agatî, 15 Trish*t*. |
| 65 | 1. 12. 1 | 1. 5. 9 | Parâ*s*ara*h*, Sohn des *S*akti*h*. | Agni*h*. | Dvipadâ Virâ*t*. |
| 66 | 1. 12. 2 | 1. 5. 10 | » » | » » | » » |
| 67 | 1. 12. 3 | 1. 5. 11 | » » | » » | » » |
| 68 | 1. 12. 4 | 1. 5. 12 | » » | » » | » » |
| 69 | 1. 12. 5 | 1. 5. 13 | » » | » » | » » |
| 70 | 1. 12. 6 | 1. 5. 14 | » » | » » | » » |
| 71 | 1. 12. 7 | 1. 5. 15 | » » | » » | Trish*t*up. |
| 72 | 1. 12. 8 | 1. 5. 17 | » » | » » | » » |
| 73 | 1. 12. 9 | 1. 5. 19 | » » | » » | » » |
| 74 | 1. 13. 1 | 1. 5. 21 | Gotama*h*, Sohn des Rahûga*n*a*h*. | » » | Gâyatrî. |
| 75 | 1. 13. 2 | 1. 5. 23 | » » | » » | » » |
| 76 | 1. 13. 3 | 1. 5. 24 | » » | » » | Trish*t*up. |
| 77 | 1. 13. 4 | 1. 5. 25 | » » | » » | » » |
| 78 | 1. 13. 5 | 1. 5. 26 | » » | » » | Gâyatrî. |
| 79 | 1. 13. 6 | 1. 5. 27 | » » | Agni*h*, 1–3 Agni*h* oder Agnir Madhyama*h* (Vaidyuta*h*). | 1–3 Trish*t*up, 4–6 Ush*n*ik, 7–12 Gâyatrî. |

| Hymne. | Mandala Anuvâka Sûkta. | Ashtaka Adhyâya Varga. | Dichter. | Gottheit. | Versmaass. |
|---|---|---|---|---|---|
| 80 | 1. 13. 7 | 1.5.29–31 | Gotamah. | Indrah. | Panktih. |
| 81 | 1. 13. 8 | 1. 6. 1 | » » | » » | » » |
| 82 | 1. 13. 9 | 1. 6. 3 | » » | » » | 1–5 Panktih, 6 Gagatî. |
| 83 | 1.13.10 | 1. 6. 4 | » » | » » | Gagatî. |
| 84 | 1.13.11 | 1. 6. 5 | » » | » » | 1–6 Anusht., 7–9 Ushnik, 10–12 Panktih, 13–15 Gâyatrî, 16–18 Trishtup, 19 Brihatî, 20 Satobrihatî. |
| 85 | 1. 14. 1 | 1. 6. 9 | » » | Marutah. | 1–4, 6–11 Gagatî, 5 u. 12 Trishtup. |
| 86 | 1. 14. 2 | 1. 6. 11 | » » | » » | Gâyatrî. |
| 87 | 1. 14. 3 | 1. 6. 13 | » » | » » | Gagatî. |
| 88 | 1. 14. 4 | 1. 6. 14 | » » | » » | 1 und 6 Prastârapanktih, 5 Virâdrûpâ, 2–4 Trisht. |
| 89 | 1. 14. 5 | 1. 6. 15 | » » | Visve Devâh. | 1–5 u. 7 Gagatî, 6 Virâtsthânâ, 8–10 Trishtup. |
| 90 | 1. 14. 6 | 1. 6. 17 | » » | » » | 1–8 Gâyatrî, 9 Anushtup. |
| 91 | 1. 14. 7 | 1. 6. 19 | » » | Somah. | 1–4, 18–23 Trisht., 5–16 Gâyatrî, 17 Ushnik. |
| 92 | 1. 14. 8 | 1. 6. 24 | » » | Ushâh, 16–18 Asvinau. | 1–4 Gagatî, 5–12 Trisht., 13–18 Ushnik. |
| 93 | 1. 14. 9 | 1. 6. 28 | » » | Agnî-Shomau. | 1–3 Anushtup, 9–11 Gâyatrî, 4–7 und 12 Trisht. 8 Gagatî od. Trishtup. |
| 94 | 1. 15. 1 | 1.6.30–32 | Kutsah, aus dem Geschlechte des Angirâh. | Agnih, 8abc Devâh, 16cd Mitrah, Varunah, Aditih, Sindhuh, Prithivî und Dyauh oder Agnih. | 1–14 Gagatî, 15 und 16 Trishtup. |
| 95 | 1. 15. 2 | 1. 7. 1 | » » | Agnih oder Agnir Aushasyah. | Trishtup. |
| 96 | 1. 15. 3 | 1. 7. 3 | » » | Agnih oder Dravinodâh. | » » |
| 97 | 1. 15. 4 | 1. 7. 5 | » » | Agnih oder Sukih. | Gâyatrî. |
| 98 | 1. 15. 5 | 1. 7. 6 | » » | Agnih oder Visvânarah. | Trishtup. |
| 99 | 1. 15. 6 | 1. 7. 7 | Kasyapah, Sohn des Marîkih (etadâdîni sûktasahasram etat tu Kasyapârsham). | Agnih oder Gâtavedâh. | » » |
| 100 | 1. 15. 7 | 1. 7. 8 | Rigrâsvah, Ambarîshah, Sahadevah, Bhayamânah, und Surâdhâh, Söhne des Vrishagîh. | Indrah. | » » |
| 101 | 1. 15. 8 | 1. 7. 12 | Kutsah, aus d. Geschlechte d. Angir. | » » | 1–7 Gagatî, 8–11 Trisht. |
| 102 | 1. 15. 9 | 1. 7. 14 | » » | » » | 1–10 Gagatî, 11 Trisht. |
| 103 | 1.15.10 | 1. 7. 16 | » » | » » | Trishtup. |
| 104 | 1.15.11 | 1. 7. 18 | » » | » » | » » |
| 105 | 1.15.12 | 1. 7. 20 | Derselbe, od. Âptyas Tritah. | Visve Devâh. | 1–7, 9–18 Panktih, 8 Mahâbrihatî Yavamadhyâ, 19 Trishtup. |
| 106 | 1. 16. 1 | 1. 7. 24 | Kutsah. | » » | 1–6 Gagatî, 7 Trishtup. |
| 107 | 1. 16. 2 | 1. 7. 25 | » » | » » | Trishtup. |
| 108 | 1. 16. 3 | 1. 7. 26 | » » | Indra-Agnî. | » » |
| 109 | 1. 16. 4 | 1. 7. 28 | » » | » » | » » |

| Hymne. | Ma*nd*ala Anuvâka Sûkta. | Ash*t*aka Adhyâya Varga. | Dichter. | Gottheit. | Versmaass. |
|---|---|---|---|---|---|
| 110 | 1. 16. 5 | 1. 7. 30 | Kutsa*h*. | *R*ibhava*h*. | 1–7 *G*agatî, 8 u. 9 Trish*t*. |
| 111 | 1. 16. 6 | 1. 7. 32 | » » | » » | 1–4 *G*agatî, 5 Trish*t*up. |
| 112 | 1. 16. 7 | 1.7.33–37 | » » | A*s*vinau, $1^a$ Dyâvâ-P*r*ithivyau, $1^b$ Agni*h*. | 1–23 *G*agatî, 24 und 25 Trish*t*up. |
| 113 | 1. 16. 8 | 1. 8. 1 | » » | Ushâ*h* $1^b$ und $^c$ Ushâ*h* und Râtrî. | Trish*t*up. |
| 114 | 1. 16. 9 | 1. 8. 5 | » » | Rudra*h*. | 1–9 *G*agatî, 10 u. 11 Trish*t*. |
| 115 | 1.16.10 | 1. 8. 7 | » » | Sûrya*h*. | Trish*t*up. |
| 116 | 1. 17. 1 | 1. 8. 8 | Kakshîvân, Sohn des Dîrghatamâ*h* u. U*s*ik, d. Sklavin des Königs von Anga. | A*s*vinau. | » » |
| 117 | 1. 17. 2 | 1. 8. 13 | » » | » » | » |
| 118 | 1. 17. 3 | 1. 8. 18 | » » | » » | » » |
| 119 | 1. 17. 4 | 1. 8. 20 | » » | » » | *G*agatî. |
| 120 | 1. 17. 5 | 1. 8. 22 | » » | A*s*vinau, 12 Du*h*svapnanâ*s*anam. | 1 Gâyatrî, 2 Kakup, 3 Kâvirâ*t*, 4 Nash*t*arûpî, 5 Tanu*s*irâ, 6 Ush*n*ik (akshárai*h*), 7 Vish*t*âra B*r*ih., 8 K*r*iti*h*, 9 Virâ*t*, 10–12 Gâyatrî. |
| 121 | 1. 18. 1 | 1.8.24–26 | » » | Vi*s*ve Devâ*h* oder Indra*h*. | Trish*t*up. |
| 122 | 1. 18. 2 | 2. 1. 1 | » » | Vi*s*ve Devâ*h*. | Trish*t*., 5 u. 6 Virâ*d*rûpâ. |
| 123 | 1. 18. 3 | 2. 1. 4 | » » | Ushâ*h*. | Trish*t*up. |
| 124 | 1. 18. 4 | 2. 1. 7 | » » | » » | » » |
| 125 | 1. 18. 5 | 2. 1. 10 | » » | Svanayasya dânastuti*h*. | 1–3, 6 u. 7 Trish*t*up, 4 u. 5 *G*agatî. |
| 126 | 1. 18. 6 | 2. 1. 11 | Kakshîvân, Bhâvayavya*h* und Roma*s*â. | 1–6 Bhâvayavya*h*, 7 Roma*s*â. | 1–5 Trish*t*up, 6 u. 7 Anush*t*up. |
| 127 | 1. 19. 1 | 2. 1. 12 | Paru*kkh*epa*h*, Sohn des Divodâsa*h*. | Agni*h*. | 1–5 Atyash*t*i*h*, 6 Atidh*r*iti*h*, 7–11 Atyash*t*i*h*. |
| 128 | 1. 19. 2 | 2. 1. 14 | » » | » » | Atyash*t*i*h*. |
| 129 | 1. 19. 3 | 2. 1. 16 | » » | 1–5 Indra*h*, 6 Indu*h*, 7–11 Indra*h*. | 1–7 u. 10 Atyash*t*i*h*, 8 u. 9 Ati*s*akvarî, 11 Ash*t*i*h*. |
| 130 | 1. 19. 4 | 2. 1. 18 | » » | Indra*h*. | 1–9 Atyash*t*i*h*, 10 Trish*t*. |
| 131 | 1. 19. 5 | 2. 1. 20 | » » | » » | Atyash*t*i*h*. |
| 132 | 1. 19. 6 | 2. 1. 21 | » » | Indra*h*, $6^a$ Indrâparvatau. | » » |
| 133 | 1. 19. 7 | 2. 1. 22 | » » | Indra*h*. | 1 Trish*t*up, 2–4 Anush*t*up, 5 Gâyatrî, 6 Dh*r*iti*h*, 7 Atyash*t*i*h*. |
| 134 | 1. 20. 1 | 2. 1. 23 | » » | Vâyu*h*. | 1–5 Atyash*t*i*h*, 6 Ash*t*i*h*. |
| 135 | 1. 20. 2 | 2. 1. 24 | » » | 1–3 Vâyu*h*, 4–8 Indra*h*, 9 Vâyu*h*. | 1–6 Atyash*t*i*h*, 7 u. 8 Ash*t*., 9 Atyash*t*i*h*. |
| 136 | 1. 20. 3 | 2. 1. 26 | » » | Mitrâvaru*n*au, 6 und 7 Lingoktadevate. | Atyash*t*i*h*, 7 Trish*t*up. |
| 137 | 1. 20. 4 | 2. 2. 1 | » » | Mitrâvaru*n*au. | Ati*s*akvarî. |
| 138 | 1. 20. 5 | 2. 2. 2 | » » | Pûshâ. | Atyash*t*i*h*. |
| 139 | 1. 20. 6 | 2. 2. 3 | » » | 1 Vi*s*ve Devâ*h*, 2 Mitrâvaru*n*au, 3–5 A*s*vinau, 6 Indra*h*, 7 Agni*h*, 8 Maruta*h*, 9 Indrâgnî, 10 B*r*ihaspati*h*, 11 Vi*s*ve Devâ*h*. | 1–4 Atyash*t*i*h*, 5 B*r*ihatî, 6–10 Atyash*t*i*h*, 11 Trish*t*up. |
| 140 | 1. 21. 1 | 2. 2. 5 | Dîrghatamâ*h*. | Agni*h*. | 1–9 *G*agatî, 10 Trish*t*up. |

